**शकुन्तला**—(गतिभङ्गं रूपयित्वा ) को नु खल्वेष निवसने मे सज्जते ? ( इति परावर्तते । )

**काश्यपः**—वत्से,

यस्य त्वया व्रणविरोपणमिङ्गुदीनां
तैलं न्यषिच्यत मुखे कुशसूचिविद्धे ।
श्यामाकमुष्टिपरिवर्धितको जहाति
सोऽयं न पुत्रकृतकः पदवीं मृगस्ते ॥ १३ ॥

**शकुन्तला**—वत्स, किं सहवासपरित्यागिनीं मामनुसरसि ? अचिरप्रसूतया जनन्या विना वर्धित एव । इदानीमपि मया विरहितं त्वां तातश्चिन्तयिष्यति । निवर्तस्व तावत् ।

**काश्यपः**—

उत्पक्ष्मणोर्नयनयोरुपरुद्धवृत्तिं
बाष्पं कुरु स्थिरतया विहतानुबन्धम् ।
अस्मिन्नलक्षितनतोन्नतभूमिभागे
मार्गे पदानि खलु ते विषमीभवन्ति ॥ १४ ॥

**शार्ङ्गरवः**—भगवन्, उदकान्तं स्निग्धो जनोऽनुगन्तव्य इति श्रूयते । तदिदं सरस्तीरम् । अत्र संदिश्य प्रतिगन्तुमर्हसि ।

**काश्यपः**—तेन हीमां क्षीरवृक्षच्छायामाश्रयामः ।

( सर्वे परिक्रम्य स्थिताः । )

**काश्यपः**—( आत्मगतम् ) किं नु खलु तत्रभवतो दुष्यन्तस्य युक्तरूपमस्माभिः संदेष्टव्यम् ? ( इति चिन्तयति । )

**शकुन्तला**—( जनान्तिकम् । ) हला, पश्य नलिनीपत्रान्तरितमपि सहचरमपश्यन्त्यातुरा चक्रवाक्यारटति । दुष्करमहं करोमि ।

**अनसूया**—सखि, मैवं मन्त्रयस्व ।

एषापि प्रियेण विना गमयति रजनीं विषाददीर्घतराम् ।
गुर्वपि विरहदुःखमाशाबन्धः साहयति ॥ १५ ॥

**काश्यपः**—शार्ङ्गरव, इति त्वया मद्वचनात्स राजा शकुन्तलां पुरस्कृत्य वक्तव्यः ।

**शार्ङ्गरवः**—आज्ञापयतु भवान् ।

**काश्यपः**—

अस्मान्साधु विचिन्त्य संयमधनानुच्चैः कुलं चात्मन-
स्त्वय्यस्याः कथमप्यबान्धवकृतां स्नेहप्रवृत्तिं च ताम् ।
सामान्यप्रतिपत्तिपूर्वकमियं दारेषु दृश्या त्वया
भाग्यायत्तमतः परं न खलु तद्वाच्यं वधूबन्धुभिः ॥ १६ ॥

**शार्ङ्गरवः**—गृहीतः संदेशः ।

**काश्यपः**—वत्से, त्वमिदानीमनुशासनीयासि । वनौकसोऽपि सन्तो लौकिकज्ञा वयम् ।

**शार्ङ्गरवः**—न खलु धीमतां कश्चिदविषयो नाम ।

**काश्यपः**—सा त्वमितः पतिकुलं प्राप्य

शुश्रूषस्व गुरून्कुरु प्रियसखीवृत्तिं सपत्नीजने
भर्तुर्विप्रकृतापि रोषणतया मा स्म प्रतीपं गमः ।
भूयिष्ठं भव दक्षिणा परिजने भाग्येष्वनुत्सेकिनी
यान्त्येवं गृहिणीपदं युवतयो वामाः कुलस्याधयः ॥ १७ ॥

कथं वा गौतमी मन्यते ?

**गौतमी**—एतावान्वधूजनस्योपदेशः। जाते, एतत्खलु सर्वमवधारय ।

**काश्यपः**—वत्से, परिष्वजस्व मां सखीजनं च ।

**शकुन्तला**—तात, इत एव किं प्रियंवदामिश्रे सख्यौ निवर्तिष्येते ?

**काश्यपः**—वत्से, इमे अपि प्रदेये। न युक्तमनयोस्तत्र गन्तुम्। त्वया सह गौतमी यास्यति।

**शकुन्तला**—( पितरमाश्लिष्य ) कथमिदानीं तातस्याङ्कात्परिभ्रष्टा मलयतरून्मूलिता चन्दनलतेव देशान्तरे जीवितं धारयिष्ये ?

**काश्यपः**—वत्से, किमेवं कातरासि ?

अभिजनवतो भर्तुः श्लाघ्ये स्थिता गृहिणीपदे
विभवगुरुभिः कृत्यैस्तस्य प्रतिक्षणमाकुला।
तनयमचिरात्प्राचीवार्कं प्रसूय च पावनं
मम विरहजां न त्वं वत्से शुचं गणयिष्यसि ॥ १८ ॥

( शकुन्तला पितुः पादयोः पतति। )

**काश्यपः**—यदिच्छामि ते तदस्तु।

**शकुन्तला**—( सख्यावुपेत्य ) हला, द्वे अपि मां सममेव परिष्वजेथाम्।

**सख्यौ**—( तथा कृत्वा ) सखि, यदि नाम स राजा प्रत्यभिज्ञानमन्थरो भवेत्ततस्तस्मा इदमात्मनामधेयाङ्कितमङ्गुलीयकं दर्शय।

**शकुन्तला**—अनेन संदेहेन वामाकम्पितास्मि।

**सख्यौ**—मा भैषीः। अतिस्नेहः पापशङ्की।

**शार्ङ्गरवः**—युगान्तरमारूढः सविता। त्वरतामत्रभवती।

**शकुन्तला**—( आश्रमाभिमुखी स्थित्वा ) तात, कदा नु भूयस्तपोवनं प्रेक्षिष्ये ?

**काश्यपः**—श्रूयताम्—

भूत्वा चिराय चतुरन्तमहीसपत्नी
दौष्यन्तिमप्रतिरथं तनयं निवेश्य।

भर्त्रा तदर्पितकुटुम्बभरेण सार्धं
शान्ते करिष्यसि पदं पुनराश्रमेऽस्मिन् ॥ १९ ॥

**गौतमी**—जाते, परिहीयते गमनवेला। निवर्तय पितरम्। अथवा चिरेणापि पुनः पुनरेषैवं मन्त्रयिष्यते। निवर्ततां भवान्।

**काश्यपः**—वत्से, उपरुध्यते तपोनुष्ठानम्।

**शकुन्तला**—( भूयः पितरमाश्लिष्य ) तपश्चरणपीडितं तातशरीरम्। तन्मातिमात्रं मम कृत उत्कण्ठितुम्।

**काश्यपः**—( सनिःश्वासम् )

शममेष्यति मम शोकः कथं नु वत्से त्वया रचितपूर्वम्।
उटजद्वारविरूढं नीवारबलिं विलोकयतः ॥ २० ॥

गच्छ। शिवास्ते पन्थानः सन्तु।

( निष्क्रान्ता शकुन्तला सहयायिनश्च। )

**सख्यौ**—( शकुन्तलां विलोक्य ) हा धिक्, हा धिक्। अन्तर्हिता शकुन्तला वनराज्या।

**काश्यपः**—( सनिःश्वासम् ) अनसूये, गतवती वां सहधर्मचारिणी। निगृह्य शोकमनुगच्छतं मां प्रस्थितम्।

**उभे**—तात, शकुन्तलाविरहितं शून्यमिव तपोवनं कथं प्रविशावः।

**काश्यपः**—स्नेहप्रवृत्तिरेवंदर्शिनी। ( सविमर्शं परिक्रम्य ) हन्त भोः, शकुन्तलां पतिकुलं विसृज्य लब्धमिदानीं स्वास्थ्यम्। कुतः?

अर्थो हि कन्या परकीय एव
तामद्य संप्रेष्य परिग्रहीतुः।
जातो ममायं विशदः प्रकामं
प्रत्यर्पितन्यास इवान्तरात्मा ॥ २१ ॥

( इति निष्क्रान्ताः सर्वे। )

—शाकुन्तले चतुर्थोऽङ्कः।

---

Repudiation of Shakuntala by Dushyanta as hi
wife. (This total forgetfulness and denial on the
part of the King Dushyanta is due to the
curse given by sage Durvasas owing to
the cold reception he received at
the hands of Shakuntala when
he visited the hermitage of
Kashyapa during his
absence.)

**राजा**—अपि निर्विघ्नतपसो मुनयः ?

**ऋषयः**—

कुतो धर्मक्रियाविघ्नः सतां रक्षितरि त्वयि ।
तमस्तपति घर्मांशौ कथमाविर्भविष्यति ॥ १४ ॥

**राजा**—अर्थवान्खलु मे राजशब्दः । अथ भगवांल्लोकानुग्रहाय कुशली काश्यपः ?

**शार्ङ्गरवः**—स्वाधीनकुशलाः सिद्धिमन्तः । स भवन्तमनामयप्रश्नपूर्वकमिदमाह ।

**राजा**—किमाज्ञापयति भगवान् ।

**शार्ङ्गरवः**—यन्मिथःसमयादिमां मदीयां दुहितरं भवानुपायंस्त तन्मया प्रीतिमता युवयोरनुज्ञातम् । कुतः ?

त्वमर्हतां प्राग्रसरः स्मृतोऽसि नः
शकुन्तला मूर्तिमती च सत्क्रिया ।
समानयंस्तुल्यगुणं वधूवरं
चिरस्य वाच्यं न गतः प्रजापतिः ॥ १५ ॥

तदिदानीमापन्नसत्त्वा प्रतिगृह्यतां सहधर्मचरणायेति ।

**गौतमी**—आर्य, किमपि वक्तुकामास्मि । न मे वचनावसरोऽस्ति । कथमिति ।

नावेक्षितो गुरुजनोऽनया न खलु पृष्टश्च बन्धुजनः ।
परस्परस्मिन्नेव चरिते भणामि किमेकैकम् ॥ १६ ॥

**शकुन्तला**—( आत्मगतम् ) किं नु खल्वार्यपुत्रो भणति ?

**राजा**—किमिदमुपन्यस्तम् ?

**शकुन्तला**—( आत्मगतम् ) पावकः खलु वचनोपन्यासः ।

**शार्ङ्गरव**—कथमिदं नाम । भवन्त एव सुतरां लोकवृत्तान्तनिष्णाताः ।

सतीमपि ज्ञातिकुलैकसंश्रयां
जनोऽन्यथा भर्तृमतीं विशङ्कते ।
अतः समीपे परिणेतुरिष्यते
प्रियाप्रिया वा प्रमदा स्वबन्धुभिः ॥ १७ ॥

**राजा**—किं चात्रभवती मया परिणीतपूर्वा ?

**शकुन्तला**—( सविषादम् । आत्मगतम् )हृदय, सांप्रतं त आशङ्का ।

**शार्ङ्गरवः**—

किं कृतकार्यद्वेषो धर्मं प्रति विमुखता कृतावज्ञा ।

**राजा**—कुतोऽयमसत्कल्पनाप्रश्नः ?

**शार्ङ्गरवः**—

मूर्च्छन्त्यमी विकाराः प्रायेणैश्वर्यमत्तेषु ॥ १८ ॥

**राजा**—विशेषेणाधिक्षिप्तोऽस्मि ।

**गौतमी**—जाते, मुहूर्तं मा लज्जस्व । अपनेष्यामि तावत्तेऽवगुण्ठनम् । ततस्त्वां भर्ताभिज्ञास्यति । ( इति यथोक्तं करोति । )

**राजा**—( शकुन्तलां निर्वर्ण्य आत्मगतम् )

इदमुपनतमेवं रूपमक्लिष्टकान्ति
प्रथमपरिगृहीतं स्यान्न वेत्यव्यवस्यन् ।
भ्रमर इव विभाते कुन्दमन्तस्तुषारं
न च खलु परिभोक्तुं नैव शक्नोमि हातुम् ॥ १९ ॥

( इति विचारयन्स्थितः । )

**प्रतीहारी**—अहो धर्मावेक्षिता भर्तुः । ईदृशं नाम सुखोपनतं रूपं दृष्ट्वा कोऽन्यो विचारयति ?

**शार्ङ्गरवः**—भो राजन्, किमिति जोषमास्यते ?

**राजा**—भोस्तपोधनाः, चिन्तयन्नपि न खलु स्वीकरणमत्रभवत्याः स्मरामि । तत्कथमिमामभिव्यक्तसत्त्वलक्षणां प्रत्यात्मानं क्षेत्रिणमाशङ्कमानः प्रतिपत्स्ये ?

**शकुन्तला**—( अपवार्य ) आर्यस्य परिणय एव संदेहः । कुत इदानीं मे दूराधिरोहिण्याशा ?

**शार्ङ्गरवः**—मा तावत् ।

कृताभिमर्शामनुमन्यमानः ।
सुतां त्वया नाम मुनिर्विमान्यः ।
मुष्टं प्रतिग्राहयता स्वमर्थं
पात्रीकृतो दस्युरिवासि येन ॥ २० ॥

**शारद्वतः**—शार्ङ्गरव, विरम त्वमिदानीम् । शकुन्तले, वक्तव्यमुक्तमस्माभिः । सोऽयमत्रभवानेवमाह । दीयतामस्मै प्रत्ययप्रतिवचनम् ।

**शकुन्तला**—( अपवार्य ) इदमवस्थान्तरं गते तादृशेऽनुरागे किं वा स्मारितेन ? आत्मेदानीं मे शोचनीय इति व्यवसितमेतत् । आर्यपुत्र, संशयित इदानीं नैष समुदाचारः । पौरव, न युक्तं नाम ते तथा पुराश्रमपदे स्वभावोत्तानहृदयमिमं जनं समयपूर्वं प्रतार्य सांप्रतमीदृशैरक्षरैः प्रत्याख्यातुम् ।

**राजा**—( कर्णौ पिधाय ) शान्तं पापम् ।

व्यपदेशमाविलयितुं किमीहसे जनमिमं च पातयितुम् ।
कुलंकषेव सिन्धुः प्रसन्नमम्भस्तटतरुं च ॥ २१ ॥

**शकुन्तला**—भवतु । यदि परमार्थतः परपरिग्रहशङ्किना त्वयैवं वक्तुं प्रवृत्तं तदभिज्ञानेनामुना तवाशङ्कामपनेष्यामि ।

**राजा**—उदारः कल्पः ।

**शकुन्तला**—( मुद्रास्थानं परामृश्य ) हा धिक् ! हा धिक् ! अङ्गुलीयकशून्या मेऽङ्गुलिः ।

**गौतमी**—नूनं ते शक्रावताराभ्यन्तरे शचीतीर्थसलिलं वन्दमानायाः प्रभ्रष्टमङ्गुलीयकम् ।

**राजा**—( सस्मितम् ) इदं तत्प्रत्युत्पन्नमति स्त्रैणमिति यदुच्यते ।

**शकुन्तला**—अत्र तावद्विधिना दर्शितं प्रभुत्वम् । अपरं ते कथयिष्यामि ।

**राजा**—श्रोतव्यमिदानीं संवृत्तम् ।

**शकुन्तला**—नन्वेकस्मिन्दिवसे नवमालिकामण्डपे नलिनीपत्र-भाजनगतमुदकं तव हस्ते संनिहितमासीत् ।

**राजा**—शृणुमस्तावत् ।

**शकुन्तला**—तत्क्षणे स मे पुत्रकृतको दीर्घापाङ्गो नाम मृगपोतक उपस्थितः। त्वयायं तावत्प्रथमं पिबात्वित्यनुकम्पिनोपच्छन्दित उदकेन, न पुनस्तेऽपरिचयाद्धस्ताभ्याशमुपगतः। पश्चात्तस्मिन्नेव मया गृहीते सलिले कृतस्तेन प्रणयः। तदा त्वमित्थं प्रहसितोऽसि—सर्वः सगन्धेषु विश्वसिति, द्वाप्यत्रारण्यकाविति।

**राजा**—एवमादिभिरात्मकार्यनिर्वर्तिनीनामनृतमयवाङ्मधुभिराकृष्यन्ते विषयिणः।

**गौतमी**—महाभाग, नार्हस्येवं मन्त्रयितुम्। तपोवनसंवर्धितोऽनभिज्ञोऽयं जनः कैतवस्य।

**राजा**—तापसवृद्धे,

स्त्रीणामशिक्षितपटुत्वममानुषीषु
संदृश्यते किमुत याः प्रतिबोधवत्यः।
प्रागन्तरिक्षगमनात्स्वमपत्यजात-
मन्यैर्द्विजैः परभृताः खलु पोषयन्ति॥ २२॥

**शकुन्तला**—(सरोषम्) अनार्य, आत्मनो हृदयानुमानेन पश्यसि। क इदानीमन्यो धर्मकञ्चुकप्रवेशिनस्तृणच्छन्नकूपोपमस्य तवानुकृतिं प्रतिपत्स्यते?

**राजा**—(आत्मगतम्) संदिग्धबुद्धिं मां कुर्वन्नकैतव इवास्याः कोपो लक्ष्यते। तथा ह्यनया

मय्येव विस्मरणदारुणचित्तवृत्तौ
वृत्तं रहः प्रणयमप्रतिपद्यमाने।
भेदाद्भ्रुवोः कुटिलयोरतिलोहिताक्ष्या
भग्नं शरासनमिवातिरुषा स्मरस्य॥ २३॥

( प्रकाशम् ) भद्रे, प्रथितं दुष्यन्तस्य चरितम् । तथापीदं न लक्षये ।

**शकुन्तला**—सुष्ठु तावदत्र स्वच्छन्दचारिणी कृतास्मि, याहमस्य पुरुवंशप्रत्ययेन मुखमधोर्हृदयस्थितविषस्य हस्ताभ्याशमुपगता । ( इति पटान्तेन मुखमावृत्य रोदिति । )

**शार्ङ्गरवः**—इत्थमात्मकृतं प्रतिहतं चापलं दहति ।

अतः परीक्ष्य कर्तव्यं विशेषात्संगतं रहः ।
अज्ञातहृदयेष्वेवं वैरीभवति सौहृदम् ॥ २४ ॥

**राजा**—अयि भोः, किमत्रभवतीप्रत्ययादेवास्मान्संवृतदोषाक्षरैः क्षिणुथ ?

**शार्ङ्गरवः**—( सासूयम् ) श्रुतं भवद्भिरधरोत्तरम् ।

आ जन्मनः शाठ्यमशिक्षितो य-
स्तस्याप्रमाणं वचनं जनस्य ।
परातिसंधानमधीयते यै-
र्विद्येति ते सन्तु किलाप्तवाचः ॥ २५ ॥

**राजा**—भोः सत्यवादिन्, अभ्युपगतं तावदस्माभिरेवम् । किं पुनरिमामतिसंधाय लभ्यते ?

**शार्ङ्गरवः**—विनिपातः ।

**राजा**—विनिपातः पौरवैः प्रार्थ्यत इति न श्रद्धेयम् ।

**शारद्वतः**—शार्ङ्गरव, किमुत्तरोत्तरेण ? अनुष्ठितो गुरोः संदेशः । प्रतिनिवर्तामहे वयम् । ( राजानं प्रति ) राजन्,

तदेषा भवतः कान्ता त्यज वैनां गृहाण वा ।
उपपन्ना हि दारेषु प्रभुता सर्वतोमुखी ॥ २६ ॥

गौतमि, गच्छाग्रतः ।

( इति प्रस्थिताः । )

**शकुन्तला**—हम्, अमुना तावत् कितवेन विप्रलब्धास्मि । यूयमपि मां परित्यजथ ? ( इत्यनुप्रतिष्ठते । )

**गौतमी**—( स्थित्वा ) वत्स शार्ङ्गरव, अनुगच्छतीयं खलु नः करुणपरिदेविनी शकुन्तला । प्रत्यादेशपरुषे भर्तरि किं वा मे पुत्रिका करोतु ?

**शार्ङ्गरवः**—( सरोषं निवृत्य ) किं पुरोभागे स्वातन्त्र्यमवलम्बसे ?

( शकुन्तला भीता वेपते । )

**शार्ङ्गरवः**—शकुन्तले,

यदि यथा वदति क्षितिपस्तथा
त्वमसि किं पितुरुत्कुलया त्वया ।
अथ तु वेत्सि शुचि व्रतमात्मनः
पतिकुले तव दास्यमपि क्षमम् ॥ २७ ॥

नत्तिष्ठ । साधयामो वयम् ।

**राजा**—भोस्तपस्विन्, किमत्रभवतीं विप्रलभसे ।

कुमुदान्येव शशाङ्कः सविता बोधयति पङ्कजान्येव ।
वशिनां हि परपरिग्रहसंश्लेषपराङ्मुखी वृत्तिः ॥ २८ ॥

**शार्ङ्गरवः**—यदा तु पूर्ववृत्तमन्यासङ्गाद्विस्मृतो भवान्, तदा कथमधर्मभीरुता ?

**राजा**—भवन्तमेवात्र गुरुलाघवं पृच्छामि ।

मूढः स्यामहमेषा वा वदेन्मिथ्येति संशये ।
दारत्यागी भवाम्याहो परस्त्रीस्पर्शपांसुलः ॥ २९ ॥

**पुरोहितः**—( विचार्य ) यदि तावदेवं क्रियताम् ।

**राजा**—अनुशास्तु मां भवान् ।

**पुरोहितः**—अत्रभवती तावदा प्रसवादस्मद्गृहे तिष्ठतु । कुत इदमुच्यत इति चेत्, त्वं साधुभिरादिष्टपूर्वः प्रथममेव चक्रवर्तिनं पुत्रं जनयिष्यसीति । स चेन्मुनिदौहित्रस्तल्लक्षणोपपन्नो भविष्यति, अभिनन्द्य शुद्धान्तमेनां प्रवेशयिष्यासि । विपर्यये तु पितुरस्याः समीपनयनमवस्थितमेव ।

**राजा**—यथा गुरुभ्यो रोचते ।

**पुरोहितः**—वत्से, अनुगच्छ माम् ।

**शकुन्तला**—भगवति वसुधे, देहि मे विवरम् ।

( इति रुदती प्रस्थिता । निष्क्रान्ता सह पुरोधसा तपस्विभिश्च । )

( राजा शापव्यवहितस्मृतिः शकुन्तलागतमेव चिन्तयति । )

—शाकुन्तले पञ्चमोऽङ्कः ।

---

This dialogue shows the picture of Society during the time of Kalidasa, thus evidencing his study of the depth of human nature. We see here how the poor suffer at the hands of the police when they have the misfortune of falling into their hands.

( ततः प्रविशति नागरिकः श्यालः पश्चाद्बद्धपुरुषमादाय रक्षिणौ च । )

**रक्षिणौ**—( ताडयित्वा ) अरे कुम्भीरक, कथय कुत्र त्वयैतन्मणिबन्धनोत्कीर्णनामधेयं राजकीयमङ्गुलीयकं समासादितम् ।

**पुरुषः**—( भीतिनाटितकेन ) प्रसीदन्तु भावमिश्राः । अहं नेदृशकर्मकारी ।

**प्रथमः**—किं शोभनो ब्राह्मण इति कलयित्वा राज्ञा प्रतिग्रहो दत्तः ?

**पुरुषः**—शृणुतेदानीम् । अहं शक्रावताराभ्यन्तरवासी धीवरः ।

**द्वितीयः**—पाटच्चर, किमस्माभिर्जातिः पृष्टा ?

**श्यालः**—सूचक, कथयतु सर्वमनुक्रमेण । मैनमन्तरे प्रतिबध्नीतम् ।

**उभौ**—यदावुत्त आज्ञापयति । कथय ।

**पुरुषः**—अहं जालोद्गालादिभिर्मत्स्यबन्धनोपायैः कुटुम्बभरणं करोमि ।

**श्यालः**—( विहस्य ) विशुद्ध इदानीमाजीवः ।

**पुरुषः**—

सहजं किल यद्विनिन्दितं न खलु तत्कर्म विवर्जनीयम् ।
पशुमारणकर्मदारुणोऽनुकम्पामृदुरेव श्रोत्रियः ॥ १ ॥

**श्यालः**—ततस्ततः ।

**पुरुषः**—एकस्मिन्दिवसे खण्डशो रोहितमत्स्यो मया कल्पितो यावत् । तस्योदराभ्यन्तर इदं रत्नभासुरमङ्गुलीयं दृष्ट्वा पश्चादहं तस्य विक्रयाय दर्शयन्गृहीतो भावमिश्रैः । मारयत वा मुञ्चत वा । अयमस्यागमवृत्तान्तः ।

**श्यालः**—जानुक, विस्रगन्धी गोधादी मत्स्यबन्ध एव निःसंशयम् । अङ्गुलीयकदर्शनमस्य विमर्शयितव्यम् । राजकुलमेव गच्छामः

**रक्षिणौ**—तथा । गच्छ अरे गण्डभेदक ।

( सर्वे परिक्रामन्ति । )

**श्यालः**—सूचक, इमं गोपुरद्वारेऽप्रमत्तौ प्रतिपालयतं यावदिदमङ्गुलीयकं यथागमनं भर्तुर्निवेद्य ततः शासनं प्रतीक्ष्य निष्क्रमामि

**उभौ**—प्रविशत्वावुत्तः स्वामिप्रसादाय ।

( इति निष्क्रान्तः श्यालः । )

**प्रथमः**—जानुक, चिरायते खल्वावुत्तः ।

**द्वितीयः**—नन्ववसरोपसर्पणीया राजानः ।

**प्रथमः**—जानुक, प्रस्फुरतो मम हस्तावस्य वधार्थं सुमनसः पिनद्धुम् । ( इति पुरुषं निर्दिशति । )

**पुरुषः**—नार्हति भावोऽकारणमारणं भावयितुम् ।

**द्वितीयः**—( विलोक्य ) एष नौ स्वामी पत्रहस्तो राजशासनं प्रतीक्ष्येतोमुखो दृश्यते । गृध्रबलिर्भविष्यसि, शुनो मुखं वा द्रक्ष्यसि ।

( प्रविश्य । )

**श्यालः**—सूचक, मुच्यतामेष जालोपजीवी । उपपन्नः खल्वङ्गुलीयस्यागमः ।

**सूचकः**—यथावुत्तो भणाति ।

**द्वितीयः**—एष यमसदनं प्रविश्य प्रतिनिवृत्तः । ( इति पुरुषं परिमुक्तबन्धनं करोति । )

**पुरुषः**—( श्यालं प्रणम्य ) भर्तः, अथ कीदृशो म आजीवः ?

**श्यालः**—एष भर्त्राङ्गुलीयकमूल्यसंमितः प्रसादोऽपि दापितः । ( इति पुरुषाय स्वं प्रयच्छति । )

**पुरुषः**—( सप्रणामं प्रतिगृह्य ) भर्तः, अनुगृहीतोऽस्मि ।

**सूचकः**—एष नामानुग्रहो यच्छूलादवतार्य हस्तिस्कन्धे प्रतिष्ठापितः ।

**जानुकः**—आवुत्त, परितोषं कथय । तेनाङ्गुलीयकेन भर्तुः संमतेन भवितव्यम् ।

**श्यालः**—न तस्मिन्महार्हे रत्नं भर्तुर्बहुमतमिति तर्कयामि। तस्य दर्शनेन भर्तुरभिमतो जनः स्मारितः। मुहूर्तं प्रकृतिगम्भीरोऽपि पर्युत्सुकमना आसीत्।

**सूचकः**—सेवितं नामावुत्तेन।

**जानुकः**—ननु भण—अस्य कृते मत्स्यशत्रोरिति। (इति पुरुषमसूयया पश्यति।)

**पुरुषः**—भट्टारक, इतोऽर्धं युष्माकं सुमनोमूल्यं भवतु।

**जानुकः**—एतावद्युज्यते।

**श्यालः**—धीवर, महत्तरस्त्वं प्रियवयस्यक इदानीं मे संवृत्तः। कादम्बरीसाक्षिकमस्माकं प्रथमसौहृदमिष्यते। तच्छौण्डिकापणमेव गच्छामः। (इति निष्क्रान्ताः सर्वे।)

शाकुन्तले षष्ठोऽङ्कः।

---

Remembrance and Recognition of Shakuntala by means of the Ring brought by the fisherman.

**राजा**—वयस्य, रन्ध्रोपनिपातिनोऽनर्था इति यदुच्यते तदव्यभिचारि वचः। कुतः ?

मुनिसुताप्रणयस्मृतिरोधिना
मम च मुक्तमिदं तमसा मनः।
मनसिजेन सखे प्रहरिष्यता
धनुषि चूतशरश्च निवेशितः॥ ८॥

**विदूषकः**—तिष्ठ तावत्। अनेन दण्डकाष्ठेन कन्दर्पव्याधिं नाशयिष्यामि। (इति दण्डकाष्ठमुद्यम्य चूताङ्कुरं पातयितुमिच्छति।)

**राजा**—( सस्मितम् ) भवतु । दृष्टं ब्रह्मवर्चसम् । सखे, क्वोपविष्टः प्रियायाः किंचिदनुकारिणीषु लतासु दृष्टिं विलोभयामि ?

**विदूषकः**—नन्वासन्नपरिचारिका चतुरिका भवता संदिष्टा । माधवीमण्डप इमां वेलामतिवाहयिष्ये । तत्र मे चित्रफलकगतां स्वहस्तलिखितां तत्रभवत्याः शकुन्तलायाः प्रतिकृतिमानयेति ।

**राजा**—ईदृशं हृदयविनोदनस्थानम् । तत्तमेव मार्गमादेशय ।

**विदूषकः**—इत इतो भवान् ।

( उभौ परिक्रामतः । सानुमत्यनुगच्छति । )

**विदूषकः**—एष मणिशिलापट्टकसनाथो माधवीमण्डप उपहाररमणीयतया निःसंशयं स्वागतेनेव नौ प्रतीच्छति । तत्प्रविश्य निषीदतु भवान् ।

( उभौ प्रवेशं कृत्वोपविष्टौ । )

**सानुमती**—लतासंश्रिता द्रक्ष्यामि तावत्सख्याः प्रतिकृतिम् । ततोऽस्या भर्तुर्बहुमुखमनुरागं निवेदयिष्यामि । ( इति तथा कृत्वा स्थिता । )

**राजा**—सखे, सर्वमिदानीं स्मरामि शकुन्तलायाः प्रथमवृत्तान्तम् । कथितवानस्मि भवते च । स भवान्प्रत्यादेशवेलायां मत्समीपगतो नासीत् । पूर्वमपि न त्वया कदाचित्संकीर्तितं तत्रभवत्या नाम । कच्चिदहमिव विस्मृतवानसि त्वम् ?

**विदूषकः**—न विस्मरामि । किंतु सर्वं कथयित्वावसाने पुनस्त्वया परिहासविजल्प एष न भूतार्थ इत्याख्यातम् । मयापि मृत्पिण्डबुद्धिना तथैव गृहीतम् । अथवा भवितव्यता खलु बलवती ।

**सानुमती**—एवमेवैतत् ।

**राजा**—( ध्यात्वा ) सखे, त्रायस्व माम् ।

**विदूषकः**—भोः, किमेतत् । अनुपपन्नं खल्वीदृशं त्वयि । कदापि सत्पुरुषाः शोकवक्तव्या न भवन्ति । ननु प्रवातेऽपि निष्कम्पा गिरयः ।

**राजा**—वयस्य, निराकारणविक्लवायाः प्रियायाः समवस्थामनुस्मृत्य बलवदशरणोऽस्मि । सा हि

इतः प्रत्यादेशात्स्वजनमनुगन्तुं व्यवसिता
मुहुस्तिष्ठेत्युच्चैर्वदति गुरुशिष्ये गुरुसमे ।
पुनर्दृष्टिं बाष्पप्रसरकलुषामर्पितवती
मयि क्रूरे यत्तत्सविषमिव शल्यं दहति माम् ॥ ९ ॥

**सानुमती**—अहो, ईदृशी स्वकार्यपरता । अस्य संतापेनाहं रमे ।

**विदूषकः**—भोः, अस्ति मे तर्कः केनापि तत्रभवत्याकाशचारिणा नीतेति ।

**राजा**—कः पतिदेवतामन्यः परामर्ष्टुमुत्सहेत । मेनका किल सख्यास्ते जन्मप्रतिष्ठेति श्रुतवानस्मि । तत्सहचारिणीभिः सखी ते हृतेति मे हृदयमाशङ्कते ।

**सानुमती**—संमोहः खलु विस्मयनीयो न प्रतिबोधः ।

**विदूषकः**—यद्येवमस्ति खलु समागमः कालेन तत्रभवत्या ।

**राजा**—कथमिव ?

**विदूषकः**—न खलु मातापितरौ भर्तृवियोगदुःखितां दुहितरं द्रष्टुं पारयतः ।

**राजा**—वयस्य,

स्वप्नो नु माया नु मतिभ्रमो नु
क्लिष्टं नु तावत्फलमेव पुण्यम् ।
असंनिवृत्त्यै तदतीतमेते
मनोरथा नाम तटप्रपाताः ॥ १० ॥

**विदूषकः**—मैवम् । नन्वङ्गुलीयकमेव निदर्शनमवश्यंभाविनः, अचिन्तनीयः समागमो भवतीति ।

**राजा**—( अङ्गुलीयकं विलोक्य ) अये, इदं तावदसुलभस्थानभ्रंशि शोचनीयम् ।

तव सुचरितमङ्गुलीय नूनं
प्रतनु ममेव विभाव्यते फलेन ।
अरुणनखमनोहरासु तस्या-
श्च्युतमसि लब्धपदं यदङ्गुलीषु ॥ ११ ॥

**सानुमती**—यद्यन्यहस्तगतं भवेत् सत्यमेव शोचनीयं भवेत् ।

**विदूषकः**—भोः, इयं नाममुद्रा केनोपायेन तत्रभवत्या हस्ताभ्याशं प्रापिता ?

**सानुमती**—ममापि कौतुहलेनाकारित एषः ।

**राजा**—श्रूयताम् । तदा स्वनगराय प्रस्थितं मां प्रिया सबाष्पमिदमाह 'कियच्चिरेणार्यपुत्रः प्रतिपत्तिं दास्यति' इति ।

**विदूषकः**—ततस्ततः ।

**राजा**—पश्चादिमां मुद्रां तदङ्गुलौ निवेशयता मया प्रत्यभिहिता ।

एकैकमत्र दिवसे दिवसे मदीयं
नामाक्षरं गणय गच्छति यावदन्तम् ।
तावत्प्रिये मदवरोधगृहप्रवेशं
नेता जनस्तव समीपमुपैष्यतीति ॥ १२ ॥

तच्च दारुणात्मना मया मोहान्नानुष्ठितम् ।

**सानुमती**—रमणीयः खल्ववधिर्विधिना विसंवादितः ।

**विदूषकः**—कथं धीवरकल्पितस्य रोहितमत्स्यस्योदराभ्यन्तर आसीत् ?

**राजा**—शचीतीर्थं वन्दमानायाः सख्यास्ते हस्ताद्गङ्गास्रोतसि परिभ्रष्टम् ।

**विदूषकः**—युज्यते ।

**सानुमती**—अत एव तपस्विन्याः शकुन्तलाया अधर्मभीरोरस्य राजर्षेः परिणये संदेह आसीत् । अथवेदृशोऽनुरागोऽभिज्ञानमपेक्षते कथमिवैतत् ?

**राजा**—उपालप्स्ये तावदिदमङ्गुलीयकम् ।

**विदूषकः**—( आत्मगतम् ) गृहीतोऽनेन पन्था उन्मत्तानाम् ।

**राजा**—

कथं नु तं बन्धुरकोमलाङ्गुलिं
करं विहायासि निमग्नमम्भसि ।

अथवा—

अचेतनं नाम गुणं न लक्षये-
न्मयैव कस्मादवधीरिता प्रिया ॥ १३ ॥

**विदूषकः**—( आत्मगतम् ) कथं बुभुक्षया खादितव्योऽस्मि ।

**राजा**—अकारणपरित्यागानुशयतप्तहृदयस्तावदनुकम्प्यतामयं जनः पुनर्दर्शनेन ।

( प्रविश्यापटीक्षेपेण चित्रफलकहस्ता । )

**चतुरिका**—इयं चित्रगता भट्टिनी । ( इति चित्रफलकं दर्शयति । )

**विदूषकः**—साधु वयस्य, मधुरसंस्थानदर्शनीयो भावानुप्रवेश स्खलतीव मे दृष्टिर्निम्नोन्नतप्रदेशेषु ।

**सानुमती**—अहो एषा राजर्षेर्निपुणता । जाने सख्यग्रतो मे वर्तत इति ।

**राजा**—

यद्यत्साधु न चित्रे स्यात्क्रियते तत्तदन्यथा ।
तथापि तस्या लावण्यं रेखया किंचिदन्वितम् ॥ १४ ॥

**सानुमती**—सदृशमेतत्पश्चात्तापगुरोः स्नेहस्यानवलेपस्य च ।

**विदूषकः**—भोः, इदानीं तिस्रस्तत्रभवत्यो दृश्यन्ते । सर्वाश्च दर्शनीयाः । कतमात्र तत्रभवती शकुन्तला ?

**सानुमती**—अनभिज्ञः खल्वीदृशस्य रूपस्य मोहदृष्टिरयं जनः ।

**राजा**—त्वं तावत्कतमां तर्कयसि ?

**विदूषकः**—तर्कयामि यैषा शिथिलकेशबन्धनोद्वान्तकुसुमेन केशान्तेनोद्भिन्नस्वेदबिन्दुना वदनेन विशेषतोऽपसृताभ्यां बाहुभ्यामवसेकस्निग्धतरुणपल्लवस्य चूतपादपस्य पार्श्वे ईषत्परिश्रान्तेवालिखिता सा शकुन्तला, इतरे सख्याविति ।

**राजा**—निपुणो भवान् । अस्त्यत्र मे भावचिह्नम् ।

स्विन्नाङ्गुलिविनिवेशो रेखाप्रान्तेषु दृश्यते मलिनः ।
अश्रु च कपोलपतितं दृश्यमिदं वर्तिकोच्छ्वासात् ॥ १५ ॥

चतुरिके, अर्धलिखितमेतद्विनोदस्थानमस्माभिः । गच्छ, वर्तिकां तावदानय ।

**चतुरिका**—आर्य माढव्य, अवलम्बस्व चित्रफलकं यावदागच्छामि ।

**राजा**—अहमेवैतदवलम्बे । ( इति यथोक्तं करोति । )

( निष्क्रान्ता चेटी । )

**राजा**—अहं हि—

साक्षात्प्रियामुपगतामपहाय पूर्वं
चित्रार्पितां पुनरिमां बहु मन्यमानः ।
स्रोतोवहां पथि निकामजलामतीत्य
जातः सखे प्रणयवान्मृगतृष्णिकायाम् ॥ १६ ॥

**विदूषकः**—( आत्मगतम् ) एषोऽत्रभवान्नदीमतिक्रम्य मृगतृष्णिकां संक्रान्तः । भोः, अपरं किमत्र लिखितव्यम् ?

**सानुमती**—यो यः प्रदेशः सख्या मेऽभिरूपस्तं तमालिखितव्यम् ।

**राजा**—श्रूयताम् ।

कार्या सैकतलीनहंसमिथुना स्रोतोवहा मालिनी
पादास्तामभितो निषण्णहरिणा गौरीगुरोः पावनाः ।
शाखालम्बितवल्कलस्य च तरोर्निर्मातुमिच्छाम्यधः
शृङ्गे कृष्णमृगस्य वामनयनं कण्डूयमानां मृगीम् ॥ १७ ॥

**विदूषकः**—( आत्मगतम् ) यथाहं पश्यामि तथा पूरितव्यमनेन चित्रफलकं लम्बकूर्चानां तापसानां कदम्बैः ।

**राजा**—वयस्य, अन्यच्च शकुन्तलायाः प्रसाधनमभिप्रेतमस्माभिः ।

**विदूषकः**—किमिव ?

**सानुमती**—वनवासस्य सौकुमार्यस्य विनयस्य च यत्सदृशं भविष्यति ।

**राजा**—

कृतं न कर्णार्पितबन्धनं सखे
शिरीषमागण्डविलम्बिकेसरम् ।
न वा शरच्चन्द्रमरीचिकोमलं
मृणालसूत्रं रचितं स्तनान्तरे ॥ १८ ॥

**विदूषकः**—भोः, किं नु तत्रभवती रक्तकुवलयपल्लवशोभिनाग्रहस्तेन मुखमपवार्य चकितचकितेव स्थिता । ( सावधानं निरूप्य ) आः ! एष दास्याः पुत्रः कुसुमरसपाटच्चरस्तत्रभवत्या वदनमभिलङ्घति मधुकरः ।

**राजा**—ननु वार्यतामेष धृष्टः ।

**विदूषकः**—भवानेवाविनीतानां शासितास्य वारणे प्रभविष्यति ।

**राजा**—युज्यते । अयि भोः कुसुमलताप्रियातिथे, किमत्र परिपतनखेदमनुभवसि ?

एषा कुसुमनिषण्णा तृषितापि सती भवन्तमनुरक्ता ।
प्रतिपालयति मधुकरी न खलु मधु विना त्वया पिबति ॥ १९ ॥

**सानुमती**—अद्याभिजातं खल्वेष वारितः ।

**विदूषकः**—प्रतिषिद्धापि वामैषा जातिः ।

**राजा**—एवं भोः, न मे शासने तिष्ठसि । श्रूयतां तर्हि संप्रति ।

अक्लिष्टबालतरुपल्लवलोभनीयं
पीतं मया सदयमेव रतोत्सवेषु ।
बिम्बाधरं स्पृशसि चेद्भ्रमर प्रियाया-
स्त्वां कारयामि कमलोदरबन्धनस्थम् ॥ २० ॥

**विदूषकः**—एवं तीक्ष्णदण्डस्य किं न भेष्यति ? ( प्रहस्य आत्मगतम् ) एष तावदुन्मत्तः । अहमप्येतस्य सङ्गेनेदृशावर्ण इव संवृत्तः। प्रकाशं, चित्रं खल्वेतत् ।

**राजा**—कथं चित्रम् ?

**सानुमती**—अहमपीदानीमवगतार्था, किं पुनर्यथालिखितानुभाव्येषः ?

**राजा**—वयस्य, किमिदमनुष्ठितं पौरोभाग्यम् ?
दर्शनसुखमनुभवतः साक्षादिव तन्मयेन हृदयेन ।
स्मृतिकारिणा त्वया मे पुनरपि चित्रीकृता कान्ता ॥ २१ ॥

( इति बाष्पं विहरति । )

**सानुमती**—पूर्वापरविरोध्यपूर्व एष विरहमार्गः ।

**राजा**—वयस्य, कथमेवमविश्रान्तदुःखमनुभवामि ?
प्रजागरात्खिलीभूतस्तस्याः स्वप्ने समागमः ।
बाष्पस्तु न ददात्येनां द्रष्टुं चित्रगतामपि ॥ २२ ॥

**सानुमती**—सर्वथा प्रमार्जितं त्वया प्रत्यादेशदुःखं शकुन्तलायाः ।

—शाकुन्तले षष्ठोऽङ्कः ।

---

## Reunion of Dushyanta & Shakuntala at the hermitage of Maricha.

**राजा**—( कर्णं दत्त्वा ) अभूमिरियमविनयस्य । को नु खल्वेष निषिध्यते ? ( शब्दानुसारेणावलोक्य, सविस्मयम् ) अये, को नु खल्वय-मनुबध्यमानस्तपस्विनीभ्यामबालसत्त्वो बालः ?

अर्धपीतस्तनं मातुरामर्दक्लिष्टकेसरम् ।
प्रक्रीडितुं सिंहशिशुं बलात्कारेण कर्षति ॥ १४ ॥

( ततः प्रविशति यथानिर्दिष्टकर्मा तपस्विनीभ्यां बालः । )

**बालः**—जृम्भस्व, जृम्भस्व सिंह, दन्तांस्ते गणयिष्ये ।

**प्रथमा**—अविनीत, किं नोऽपत्यनिर्विशेषाणि सत्त्वानि विप्रक-रोषि । हन्त, वर्धते तव संरम्भः । स्थाने खलु ऋषिजनेन सर्वदमन इति कृतनामधेयोऽसि ।

**राजा**—किं न खलु बालेऽस्मिन्नौरस इव पुत्रे स्निह्यति मे मनः ? नूनमनपत्यता मां वत्सलयति ।

**द्वितीया**—एषा खलु केसरिणी त्वां लङ्घयिष्यति यदि तस्याः पुत्रकं न मुञ्चसि ।

**बालः**—( सस्मितम् ) अहो, बलीयः खलु भीतोऽस्मि । (इत्यधरं दर्शयति । )

**राजा**—

महतस्तेजसो बीजं बालोऽयं प्रतिभाति मे ।
स्फुलिङ्गावस्थया वह्निरेधापेक्ष इव स्थितः ॥ १५ ॥

**प्रथमा**—वत्स, एनं बालमृगेन्द्रं मुञ्च । अपरं ते क्रीडनकं दास्यामि ।

**बालः**—कुत्र ? देह्येतत् । ( इति हस्तं प्रसारयति । )

**राजा**—( दृष्ट्वा, सविस्मयम् ) कथं चक्रवर्तिलक्षणमप्यनेन धार्यते तथा ह्यस्य—

प्रलोभ्यवस्तुप्रणयप्रसारितो
विभाति जालग्रथिताङ्गुलिः करः ।
अलक्ष्यपत्रान्तरमिद्धरागया
नवोषसा भिन्नमिवैकपङ्कजम् ॥ १६ ॥

**द्वितीया**—सुव्रते, न शक्य एष वाचामात्रेण विरमयितुम् गच्छ त्वम् । मदीय उटजे मार्कण्डेयस्यर्षिकुमारस्य वर्णचित्रितो मृत्तिकामयूरस्तिष्ठति, तमस्योपहर ।

**प्रथमा**—तथा । ( इति निष्क्रान्ता । )

**बालः**—अनेनैव तावत्क्रीडिष्यामि । ( इति तापसीं विलोक्य हसति । )

**राजा**—स्पृहयामि खलु दुर्ललितायास्मै ।

आलक्ष्यदन्तमुकुलाननिमित्तहासै-
रव्यक्तवर्णरमणीयवचःप्रवृत्तीन् ।
अङ्काश्रयप्रणयिनस्तनयान्वहन्तो
धन्यास्तदङ्गरजसा मलिनीभवन्ति ॥ १७ ॥

**तापसी**—भवतु । न मामयं गणयति । ( पार्श्वमवलोकयन्ती ) कोऽत्र ऋषिकुमाराणाम् ? ( राजानमवलोक्य ) भद्रमुख, एहि तावत् । मोचयानेन दुर्मोक्हस्तग्रहेण डिम्भलीलया बाध्यमानं बालमृगेन्द्रम् ।

**राजा**—( उपगम्य सस्मितम् ) अयि भो महर्षिपुत्र,

एवमाश्रमविरुद्धवृत्तिना
संयमः किमिति जन्मतस्त्वया ।
सत्त्वसंश्रयसुखोऽपि दूष्यते
कृष्णसर्पशिशुनेव चन्दनः ॥ १८ ॥

**तापसी**—भद्रमुख, न खल्वयं ऋषिकुमारः ।

**राजा**—आकारसदृशं चेष्टितमेवास्य कथयति । स्थानप्रत्ययात्तु वयमेवंतर्किणः । ( यथाभ्यर्थितमनुतिष्ठन्बालस्पर्शमुपलभ्य, आत्मगतम् )

अनेन कस्यापि कुलाङ्कुरेण
स्पृष्टस्य गात्रेषु सुखं ममैवम् ।
कां निर्वृतिं चेतसि तस्य कुर्या-
द्यस्यायमाङ्गात्कृतिनः प्ररूढः ॥ १९ ॥

**तापसी**—( उभौ निर्वर्ण्य ) आश्चर्यमाश्चर्यम् ।

**राजा**—आर्ये, किमिव ?

**तापसी**—अस्य बालस्य तेऽपि संवादिन्याकृतिरिति विस्मापितास्मि । अपरिचितस्यापि तेऽप्रतिलोमः संवृत्त इति ।

**राजा**—( बालकमुपलालयन् ) न चेन्मुनिकुमारोऽयम्, अथ कोऽस्य व्यपदेशः ?

**तापसी**—पुरुवंशः ।

**राजा**—( आत्मगतम् ) कथमेकान्वयो मम । अतः खलु मदनुकारिणमेनमत्रभवती मन्यते । अस्त्येतत्पौरवाणामन्त्यं कुलव्रतम् ।

भवनेषु रसाधिकेषु पूर्वं
क्षितिरक्षार्थमुशन्ति ये निवासम् ।
नियतैकपतिव्रतानि पश्चा-
त्तरुमूलानि गृहीभवन्ति तेषाम् ॥ २० ॥

( प्रकाशम् ) न पुनरात्मगत्या मानुषाणामेष विषयः ।

**तापसी**—यथा भद्रमुखो भणति—अप्सरःसंबन्धेनास्य जननन्यत्र देवगुरोस्तपोवने प्रसूता ।

**राजा**—( अपवार्य ) हन्त, द्वितीयमिदमाशाजननम् ( प्रकाशम् ) अथ सा तत्रभवती किमाख्यस्य राजर्षेः पत्नी ?

**तापसी**—कस्तस्य धर्मदारपरित्यागिनो नाम संकीर्तयितुं चिन्तयिष्यति ?

**राजा**—( स्वगतम् ) इयं खलु कथा मामेव लक्ष्यीकरोति । यदि तावदस्य शिशोर्मातरं नामतः पृच्छामि । अथवानार्यः परदारव्यवहारः ।

( प्रविश्य मृण्मयूरहस्ता )

**तापसी**—सर्वदमन, शकुन्तलावण्यं प्रेक्षस्व ।

**बालः**—( सदृष्टिक्षेपम् ) कुत्र वा मम माता ?

**उभे**—नामसादृश्येन वञ्चितो मातृवत्सलः ।

**द्वितीया**—वत्स, अस्य मृत्तिकामयूरस्य रम्यत्वं पश्येति भणितोऽसि ।

**राजा**—( आत्मगतम् ) किंवा शकुन्तलेत्यस्य मातुराख्या ? सन्ति पुनर्नामधेयसादृश्यानि । अपि नाम मृगतृष्णिकेव नाममात्रप्रस्तावो मे विषादाय कल्पते ?

**बालः**—मातः, रोचते म एष भद्रमयूरः ।

**प्रथमा**—( विलोक्य सोद्वेगम् ) अहो, रक्षाकरण्डकमस्य मणिबन्धे न दृश्यते ।

**राजा**—अलमलमावेगेन । नन्विदमस्य सिंहशावविमर्दात्परिभ्रष्टम् । ( इत्यादातुमिच्छति । )

**उभे**—मा खल्विदमालम्ब्य । कथं गृहीतमनेन !

**राजा**—किमर्थं प्रतिषिद्धाः स्मः ?

**प्रथमा**—शृणोतु महाराजः । एषापराजिता नामौषधिरस्य जातकर्मसमये भगवता मारीचेन दत्ता । एतां किल मातापितरावात्मानं च वर्जयित्वापरो भूमिपतितां न गृह्णाति ।

**राजा**—अथ गृह्णाति ?

**प्रथमा**—ततस्तं सर्पो भूत्वा दशति ।

**राजा**—भवतीभ्यां कदाचिदस्याः प्रत्यक्षीकृता विक्रिया ?

**उभे**—अनेकशः ।

**राजा**—( सहर्षम्, आत्मगतम् ) कथमिव संपूर्णमपि मे मनोरथं नाभिनन्दामि ? ( इति बालं परिष्वजते । )

**द्वितीया**—सुव्रते, एहि । इमं वृत्तान्तं नियमव्यापृतायै शकुन्तलायै निवेदयावः ।

( इति निष्क्रान्ते । )

**बालः**—मुञ्च माम् । यावन्मातुः सकाशं गमिष्यामि ।

**राजा**—पुत्रक, मया सहैव मातरमभिनन्दिष्यसि ।

**बालः**—मम खलु तातो दुष्यन्तः, न त्वम् ।

**राजा**—( सस्मितम् ) एष विवाद एव प्रत्याययति ।

( ततः प्रविशत्येकवेणीधरा शकुन्तला । )

**शकुन्तला**—विकारकालेऽपि प्रकृतिस्थां सर्वदमनस्यौषधिं श्रुत्वा न म आशासीदात्मनो भागधेयेषु । अथवा यथा सानुमत्याख्यातं तथा संभाव्यत एतत् ।

**राजा**—( शकुन्तलां विलोक्य ) अये, सेयमत्रभवती शकुन्तला । यैषा—

वसने परिधूसरे वसाना
नियमक्षाममुखी धृतैकवेणिः ।
अतिनिष्करुणस्य शुद्धशीला
मम दीर्घं विरहव्रतं बिभर्ति ॥ २१ ॥

**शकुन्तला**—( पश्चात्तापविवर्णं राजानं दृष्ट्वा ) न खल्वार्यपुत्र इव । ततः क एष इदानीं कृतरक्षामङ्गलं दारकं मे गात्रसंसर्गेण दूषयति ?

**बालः**—( मातरमुपेत्य ) मातः, एष कोऽपि पुरुषो मां पुत्र इत्यालिङ्गति ।

**राजा**—प्रिये, क्रौर्यमपि मे त्वयि प्रयुक्तमनुकूलपरिणामं संवृत्तम्, यदहमिदानीं त्वया प्रत्यभिज्ञातमात्मानं पश्यामि ।

**शकुन्तला**—( आत्मगतम् ) हृदय, आश्वसिहि, आश्वसिहि । परित्यक्तमत्सरेणानुकम्पितास्मि दैवेन । आर्यपुत्रः खल्वेषः ।

**राजा**—प्रिये,

स्मृतिभिन्नमोहतमसो दिष्ट्या प्रमुखे स्थितासि मे सुमुखि ।
उपरागान्ते शशिनः समुपगतो रोहिणीयोगः ॥ २२ ॥

**शकुन्तला**—जयतु जयत्वार्यपुत्रः । ( इत्यर्धोक्ते बाष्पकण्ठी विरमति । )

**राजा**—सुन्दरि,

वाष्पेण प्रतिषिद्धेऽपि जयशब्दे जितं मया ।
यत्ते दृष्टमसंस्कारपाटलोष्ठपुटं मुखम् ॥ २३ ॥

**बालः**—मातः, क एषः ।

**शकुन्तला**—वत्स, ते भागधेयानि पृच्छ ।

**राजा**—( शकुन्तलायाः पादयोः प्रणिपत्य । )

सुतनु हृदयात्प्रत्यादेशव्यलीकमपैतु ते
किमपि मनसः संमोहो मे तदा बलवानभूत् ।
प्रबलतमसामेवंप्रायाः शुभेषु हि प्रवृत्तयः
स्रजमपि शिरस्यन्धः क्षिप्तां धुनोत्यहिशङ्कया ॥ २४ ॥

**शकुन्तला**—उत्तिष्ठत्वार्यपुत्रः । नूनं मे सुचरितप्रतिबन्धकं पुराकृतं तेषु दिवसेषु परिणाममुखमासीत्, येन सानुक्रोशोऽप्यार्यपुत्रो मयि विरसः संवृत्तः ।

( राजोत्तिष्ठति )

**शकुन्तला**—अथ कथमार्यपुत्रेण स्मृतो दुःखभाग्ययं जनः ?

**राजा**—उद्धृतविषादशल्यः कथयिष्यामि ।

मोहान्मया सुतनु पूर्वमुपेक्षितस्ते
यो बाष्पबिन्दुरधरं परिबाधमानः ।
तं तावदाकुटिलपक्ष्मविलग्नमद्य
बाष्पं प्रमृज्य विगतानुशयो भवेयम् ॥ २५ ॥

( इति यथोक्तमनुतिष्ठति । )

**शकुन्तला**—( नाममुद्रां दृष्ट्वा ) आर्यपुत्र, इदं तेऽङ्गुलीयकम् ।

**राजा**—अस्मादङ्गुलीयोपलम्भात्खलु मया स्मृतिरुपलब्धा ।

**शकुन्तला**—विषमं कृतमनेन यत्तदार्यपुत्रस्य प्रत्ययकाले दुर्लभमासीत् ।

**राजा**—तेन हि ऋतुसमवायचिह्नं प्रतिपद्यतां लता कुसुमम् ।

**शकुन्तला**—नास्य विश्वसिमि । आर्यपुत्र एवैतद्धारयतु ।

**( ततः प्रविशति मातलिः । )**

**मातलिः**—दिष्ट्या धर्मपत्नीसमागमेन पुत्रमुखदर्शनेन चायुष्मान्वर्धते ।

**राजा**—अभूत्संपादितस्वादुफलो मे मनोरथः । मातले, न खलु विदितोऽयमाखण्डलेन वृत्तान्तः स्यात् ।

**मातलिः**—( सस्मितम् ) किमीश्वराणां परोक्षम् ? एत्वायुष्मान् । भगवान्मारीचस्ते दर्शनं वितरति ।

**राजा**—शकुन्तले, अवलम्ब्यतां पुत्रः । त्वां पुरस्कृत्य भगवन्तं द्रष्टुमिच्छामि ।

**शकुन्तला**—जिह्रेम्यार्यपुत्रेण सह गुरुसमीपं गन्तुम् ।

**राजा**—अप्याचरितव्यमभ्युदयकालेषु । एह्येहि ।

—शाकुन्तले सप्तमोऽङ्कः ।

---

Dialogue between Chitralekha and Urvashi who was rescued by King Vikrama from the hands of demons who had kidnapped her. King Vikrama and Urvashi inwardly love each other.

( ततः प्रविशति रथारूढो राजा सूतश्च । भयनिमीलिताक्षी चित्रलेखादक्षिणहस्तावलम्बिता उर्वशी च )

**चित्रलेखा**—सखि, समाश्वसिहि, समाश्वसिहि ।

**राजा**—सुन्दरि, समाश्वसिहि ।

गतं भयं भीरु सुरारिसंभवं
त्रिलोकरक्षी महिमा हि वज्रिणः ।
तदेतदुन्मीलय चक्षुरायतं
निशावसाने नलिनीव पङ्कजम् ॥ ६ ॥

**चित्रलेखा**—अहो, कथमुच्छ्वसितमात्रसंभावितजीविता अद्याप्येषा संज्ञां न प्रतिपद्यते ।

**राजा**—बलवदत्र ते सखी परित्रस्ता । तथाहि—

मन्दारकुसुमदाम्ना गुरुरस्याः सूच्यते हृदयकम्पः ।
मुहुरुच्छ्वसता मध्ये परिणाहवतोः पयोधरयोः ॥ ७ ॥

**चित्रलेखा**—( सकरुणम् ) सखि उर्वशि, पर्यवस्थापयात्मानम् । अनप्सरेव प्रतिभासि ।

**राजा**—

मुञ्चति न तावदस्या भयकम्पः कुसुमकोमलं हृदयम् ।
सिचयान्तेन कथंचित्स्तनमध्योच्छ्वासिना कथितः ॥ ८ ॥

( उर्वशी प्रत्यागच्छति )

**राजा**—( सहर्षम् ) चित्रलेखे, दिष्ट्या वर्धसे । प्रकृतिमापन्ना ते प्रियसखी । पश्य—

आविर्भूते शशिनि तमसा मुच्यमानेव रात्रि-
नैशस्यार्चिर्हुतभुज इव च्छिन्नभूयिष्ठधूमा ।
मोहेनान्तर्वरतनुरियं लक्ष्यते मुक्तकल्पा
गङ्गा रोधःपतनकलुषा गच्छतीव प्रसादम् ॥ ९ ॥

**चित्रलेखा**—सखि उर्वशि, विस्रब्धा भव । आपन्नानुकम्पिना महाराजेन प्रतिहताः खलु ते त्रिदशपरिपन्थिनो हताशा दानवाः ।

**उर्वशी**—( चक्षुषी उन्मील्य ) किं प्रभावदर्शिना महेन्द्रेणाभ्युपपन्नास्मि ?

**चित्रलेखा**—न महेन्द्रेण । महेन्द्रसदृशानुभावेन अनेन राजर्षिणा पुरूरवसा ।

**उर्वशी**—( राजानमवलोक्य आत्मगतम् ) उपकृतं खलु दानवेन्द्रसंरम्भेण ।

**राजा**—( उर्वशीं विलोक्य आत्मगतम् ) स्थाने खलु नारायणमृषिं विलोभयन्त्यस्तदूरुसंभवामिमां विलोक्य व्रीडिताः सर्वा अप्सरस इति । अथवा नेयं तपस्विनः सृष्टिरित्यवैमि । कुतः ?

अस्याः सर्गविधौ प्रजापतिरभूच्चन्द्रो न कान्तिप्रदः
शृङ्गारैकरसः स्वयं नु मदनो मासो नु पुष्पाकरः ।
वेदाभ्यासजडः कथं नु विषयव्यावृत्तकौतूहलो
निर्मातुं प्रभवेन्मनोहरमिदं रूपं पुराणो मुनिः ॥ १० ॥

**उर्वशी**—सखि चित्रलेखे, सखीजनः कुत्र खलु भवेत् ?

**चित्रलेखा**—सखि, अभयप्रदायी महाराजो जानाति ।

**राजा**—( उर्वशीं विलोक्य ) महति विषादे वर्तते सखीजनः । पश्यतु भवती—

यदृच्छया त्वं सकृदप्यवन्ध्ययोः
पथि स्थिता सुन्दरि यस्य नेत्रयोः ।
त्वया विना सोऽपि समुत्सुको भवे-
त्सखीजनस्ते किमुतार्द्रसौहृदः ॥ ११ ॥

**उर्वशी**—( आत्मगतम् ) अमृतं खलु ते वचनम् । अथवा चन्द्रादमृतामिति किमाश्चर्यम् ? अत एव ते प्रेक्षितुं त्वरते मे हृदयम् ।

**राजा**—( हस्तेन दर्शयन् )

एताः सुतनु मुखं ते सख्यः पश्यन्ति हेमकूटगताः ।
उत्सुकनयना लोकाश्चन्द्रमिवोपप्लवान्मुक्तम् ॥ १२ ॥

( उर्वशी साभिलाषं पश्यति । )

**चित्रलेखा**—सखि, किं प्रेक्षसे ?

**उर्वशी**—ननु समदुःखगतः पीयते लोचनाभ्याम् ।

**चित्रलेखा**—( सस्मितम् ) अयि, कः ?

**उर्वशी**—ननु प्रणयिजनः ।

**रम्भा**—( सहर्षमवलोक्य ) सखि, चित्रलेखाद्वितीयां प्रियसखी-मुर्वशीं गृहीत्वा विशाखासहित इव भगवान्सोमः समुपस्थितो राजर्षिः ।

**मेनका**—( निर्वर्ण्य ) सखि, द्वे अपि नोऽत्र प्रिये उपनते । इयं प्रत्यानीता प्रियसखी, अयं चापरिक्षतशरीरो राजर्षिर्दृश्यते ।

**सहजन्या**—सखि, युक्तं भणसि दुर्जयो दानव इति ।

**राजा**—सूत, इदं तच्छैलशिखरम् । अवतारय रथम् ।

**सूतः**—यदाज्ञापयत्यायुष्मान् । ( इति तथा करोति । )

( उर्वशी रथावतारक्षोभं नाट्यन्ती सत्रासं राजानमवलम्बते । )

**राजा**—( स्वगतम् ) हन्त, सफलो मे विषमावतारः ।

यदिदं रथसंक्षोभादङ्गेनाङ्गं ममायतेक्षणया
स्पृष्टं सरोमकण्टकमङ्कुरितं मनसिजेनेव ॥ १३ ॥

**उर्वशी**—सखि, किमपि परतोऽपसर ।

**चित्रलेखा**—नाहं शक्नोमि ।

**रम्भा**—अत्र प्रियकारिणं संभावयामो राजर्षिम् ।

—विक्रमोर्वशीये प्रथमोऽङ्कः

Urvashi descends from heaven to openly declare her love for King Vikrama who was already lovesmitten, and was pining for her separation.

**विदूषकः**—भोः, चिन्तितो मया दुर्लभप्रणयिजनस्य समागमोपायः ।

( राजा तूष्णीमास्ते )

**उर्वशी**—का पुनर्धन्या स्त्री या अनेन परिमृग्यमाणात्मानं विनोदयति ?

**चित्रलेखा**—ध्यानाय किं विलम्बते ?

**उर्वशी**—सखि, बिभेमि सहसा प्रभावतो विज्ञातुम् ।

**विदूषकः**—भोः, ननु भणामि चिन्तितो मया दुर्लभप्रणयिजनसमागमोपायः ।

**राजा**—वयस्य, कथ्यताम् ।

**विदूषकः**—स्वप्नसमागमकारिणीं निद्रां सेवतां भवान् । अथवा तत्रभवत्या उर्वश्याः प्रतिकृतिं चित्रफलकेऽभिलिख्यालोकयन्नात्मानं विनोदय ।

**उर्वशी**—( सहर्षम् ) हीनसत्त्व हृदय, समाश्वसिहि ।

**राजा**—तदुभयमप्यनुपपन्नम् ।

हृदयमिषुभिः कामस्यान्तःसशल्यमिदं सदा
कथमुपलभे निद्रां स्वप्ने समागमकारिणीम् ।
न च सुवदनामालेख्येऽपि प्रियामसमाप्य तां
मम नयनयोरुद्बाष्पत्वं सखे न भविष्यति ॥ १० ॥

**चित्रलेखा**—सखि, श्रुतं त्वया वचनम् ?

**उर्वशी**—श्रुतम् । न पुनः पर्याप्तं हृदयस्य ।

**विदूषकः**—एतावान्मम मतिविभवः ।

**राजा**—( सनिःश्वासम् )

नितान्तकठिनां रुजं मम न वेद सा मानसीं
प्रभावविदितानुरागमवमन्यते वापि माम् ।
अलब्धफलनीरसं मम विधाय तस्मिञ्जने
समागममनोरथं भवतु पञ्चबाणः कृती ॥ ११ ॥

**चित्रलेखा**—श्रुतं त्वया ?

**उर्वशी**—हा धिक्, हा धिक् । मामप्येवमवगच्छ । सखि, असमर्थास्म्यग्रतो भूत्वात्मानं दर्शयितुम् । तत्प्रभावनिर्मितेन भूर्जपत्रेण लेखं संपाद्यान्तरा क्षेप्तुमिच्छामि ।

**चित्रलेखा**—अनुमतं मे ।

( उर्वशी नाट्येनाभिलिख्य क्षिपति । )

**विदूषकः**—अविधा अविधा भो, किं न्वेतत् ? भुजंगनिर्मोकः किं मां खादितुं निपतितः ?

**राजा**—( दृष्ट्वा ) नायं भुजंगनिर्मोकः । भूर्जपत्रगतोऽयमक्षरविन्यासः ।

**विदूषकः**—ननु खल्वदृष्टया उर्वश्या भवतः परिदेवितं श्रुत्वा भूर्जपत्रेऽनुरागसूचकान्यक्षराण्यभिलिख्य विसर्जितानि भवेयुः ।

**राजा**—नास्त्यगतिर्मनोरथानाम् । ( गृहीत्वानुवाच्य च सहर्षम् ) सखे, प्रसन्नस्ते तर्कः ।

**विदूषकः**—यदत्राभिलिखितं तच्छ्रोतुमिच्छामि ।

**उर्वशी**—साधु साधु । आर्य, नागरोऽसि ।

**राजा**—श्रूयताम् । ( इति वाचयति )

स्वामिन् संभाविता यथाहं त्वयाज्ञाता

तथा चानुरक्तस्य सुभग एवमेव तव ॥ १२ ॥

अनन्तरं च मे ललितपारिजातशयनीये

भवन्ति सुखा नन्दनवनवाता अपि शिखीव शरीरे ॥ १३ ॥

**उर्वशी**—किं नु सांप्रतं भणिष्यति ?

**चित्रलेखा**—किं नु ? भणितमेवैतेन म्लानकमलनालोपमैरङ्गैः ।

**विदूषकः**—दिष्ट्या मया खलु बुभुक्षितेन स्वस्तिवाचनिकमिव लब्धं भवतः समाश्वासनकारणम् ।

**राजा**—समाश्वासनमिति किमुच्यते ?

तुल्यानुरागपिशुनं ललितार्थबन्धं

पत्रे निवेशितमुदाहरणं प्रियायाः ।

उत्पक्ष्मलं मम सखे मदिरेक्षणाया-

स्तस्याः समागतमिवाननमाननेन ॥ १४ ॥

**उर्वशी**—अत्रावयोः समभागा मतिः ।

**राजा**—वयस्य, अङ्गुलीस्वेदेन मे लुप्यन्तेऽक्षराणि । धार्यतामयं स्वहस्ते निक्षेपः प्रियायाः ।

**विदूषकः**—( गृहीत्वा ) ततः किं तत्रभवत्युर्वशी भवतो मनोरथतरुकुसुमं दर्शयित्वा फले विसंवदिष्यति ?

**उर्वशी**—सखि, यावदुपस्थानकातरमात्मानं समवस्थापयामि, तावत्त्वमात्मानं दर्शयित्वा यन्मेऽनुमतं तद्भण ।

**चित्रलेखा**—तथा । ( इति तिरस्करिणीमपनीय राजानमुपसृत्य ) जयतु जयतु महाराजः ।

**राजा**—( संभ्रमादरगर्भम् ) स्वागतं भवत्यै। ( पार्श्वमवलोक्य ) भद्रे।

न तथा नन्दयसि मां सख्या विरहिता तया।
संगमे दृष्टपूर्वेव यमुना गङ्गया यथा १५ ॥

**चित्रलेखा**—ननु प्रथमं मेघराजिर्दृश्यते, पश्चाद्विद्युल्लता।

**विदूषकः**—( अपवार्य ) कथं नैषोर्वश्युपगता। तत्रभवत्या उर्वश्याः सहचर्यैतया भवितव्यम्।

**राजा**—एतदासनमास्यताम्।

**चित्रलेखा**—उर्वशी महाराजं शिरसा प्रणम्य विज्ञापयति।

**राजा**—किमाज्ञापयति ?

**चित्रलेखा**—मम तस्मिन्सुरारिसंभवे दुर्नये महाराज एव शरणमासीत्। सांप्रतं साहं तव दर्शनसमुत्थेनायासिना बलवद्बाध्यमाना मदनेन पुनरपि महाराजस्यानुकम्पनीया भवामि।

**राजा**—अयि सखि,

पर्युत्सुकां कथमसि प्रियदर्शनां ता-
मार्तिं न पश्यसि पुरूरवसस्तदर्थाम्।
साधारणोऽयमुभयोः प्रणये स्मरस्य
तप्तेन तप्तमयसा घटनाय योग्यम् ॥ १६ ॥

**चित्रलेखा**—( उर्वशीमुपेत्य ) सखि, इत एहि। निभृततरं भीषणं मदनं प्रेक्ष्य प्रियतमस्य ते दूत्यास्मि संवृत्ता।

**उर्वशी**—( तिरस्करिणीमपनीय ) अयि अनवस्थिते, लघ्वेव त्वया परित्यक्तास्मि।

**चित्रलेखा**—( सस्मितम् ) एतस्मिन्मुहूर्ते ज्ञास्यामि का कां त्यक्ष्यतीति। आचारं तावत्प्रतिपद्यस्व।

**उर्वशी**—( ससाध्वसमुपसृत्य सव्रीडम् ) जयतु जयतु महाराजः ।

**राजा**—( सहर्षम् ) सुन्दरि,

मया नाम जितं यस्य त्वयायं समुदीर्यते ।
जयशब्दः सहस्राक्षादागतः पुरुषान्तरम् ॥ १७ ॥

( हस्ते गृहीत्वा आसन उपवेशयाति )

**विदूषकः**—कीदृशी स्थितिर्भवदीये राज्ये? प्रियवयस्यो ब्राह्मणो न वन्द्यते ?

( उर्वशी सस्मितं प्रणमति । )

**विदूषकः**—स्वस्ति भवत्यै ।

**देवदूतः**—चित्रलेखे, त्वरयोर्वशीम् ।

मुनिना भरतेन यः प्रयोगो
भवतीष्वष्टरसाश्रयो निबद्धः ।
ललिताभिनयं तमद्य भर्ता
मरुतां द्रष्टुमनाः सलोकपालः ॥ १७ ॥

( सर्व आकर्णयन्ति । उर्वशी विषादं रूपयति । )

**चित्रलेखा**—श्रुतं त्वया देवदूतस्य वचनम् ? तदनुजानीहि महाराजम् ।

**उर्वशी**—( निःश्वस्य ) नास्ति मे वाग्विभवः ।

**चित्रलेखा**—महाराज, उर्वशी विज्ञापयति–परवशोऽयं जनः । महाराजेनाभ्यनुज्ञाता इच्छामि देवदेवस्यानपराद्धमात्मानं कर्तुम् ।

**राजा**—( कथं कथमपि वचनं संस्थाप्य ) नास्मि भवत्योरीश्वरनियोगिनश्शी किं तु स्मर्तव्यस्त्वयं जनः ।

( उर्वशी वियोगदुःखं रूपयित्वा राजानं पश्यन्ती सह सख्या निष्क्रान्ता । )

—विक्रमोर्वशीये द्वितीयोऽङ्कः ।

---

King Pururavas struck at the sudden disappearance of Urvashi falls into a temporary fit of insanity and wanders in the wilderness in search of his beloved; he makes inquiries about her whereabouts from birds, clouds, trees etc.

( ततः प्रविशत्याकाशबद्धलक्ष्यः सोन्मादो राजा । )

**राजा**—( सक्रोधम् ) आः दुरात्मन् रक्षः, तिष्ठ तिष्ठ । क्व मे प्रियतमामादाय गच्छसि ? ( विलोक्य ) हन्त, शैलशिखराद्गगनमुत्पत्य बाणैर्मामभिवर्षति । ( लोष्टं गृहीत्वा हन्तुं धावन् । अनन्तरं द्विपदिकया दिशोऽवलोक्य । )

हृदयाहितप्रियादुःखसरोवरे धुतपक्षः ।
बाष्पावलिगितनयनस्ताम्यति हंसयुवा ॥ ६ ॥

( विभाव्य सकरुणम् ) कथम् ?

नवजलधरः संनद्धोऽयं न दृप्तनिशाचरः
सुरधनुरिदं दूराकृष्टं न नाम शरासनम् ।
अयमपि पटुर्धारासारो न बाणपरम्परा
कनकनिकषस्निग्धा विद्युत्प्रिया मम नोर्वशी ॥ ७ ॥

( इति मूर्च्छितः पतति । पुनर्द्विपदिकयोत्थाय निःश्वस्य )

मया ज्ञातं मृगलोचनां निशाचरः कोऽपि हरति ।
यावन्नु नवतडिच्छ्यामलो धाराधरो वर्षति ॥ ८ ॥

( इति सकरुणं विचिन्त्य ) क्व नु खलु रम्भोरूर्गता स्यात् ?

तिष्ठेत्कोपवशात्प्रभावपिहिता दीर्घं न सा कुप्यति
स्वर्गायोत्पतिता भवेन्मयि पुनर्भावार्द्रमस्या मनः ।

तां हर्तुं विबुधद्विषोऽपि हि न मे शक्ताः पुरोवर्तिनीं
सा चात्यन्तमगोचरं नयनयोर्यातेति कोऽयं विधिः ॥ ९ ॥

( इति द्विपदिकया दिशोऽवलोक्य सास्रम् ) अये, परावृत्तभागधेयानां दुःखं दुःखानुबन्धि । कुतः ?

अयमेकपदे तया वियोगः
प्रियया चोपनतः सुदुःसहो मे ।
नववारिधरोदयादहोभि-
र्भवितव्यं च निरातपत्वरम्यैः ॥ १० ॥

( अनन्तरे चर्चरी । )

जलधर संहरेतं कोपमाज्ञप्तः
अविरलधारासारदिशामुखकान्ताः ।
ए अहं पृथ्वीं भ्रमन्यदि प्रियां प्रेक्षिष्ये
तदा यद्यत्करिष्यसि तत्तत्सहिष्ये ॥ ११ ॥

( विहस्य ) वृथा खलु मया मनसः संतापवृद्धिरुपेक्ष्यते । यदा मुनयोऽप्येवं व्याहरन्ति ' राजा कालस्य कारणम् ' इति । तत्किमहं जलधरसमयं न प्रत्यादिशामि ।

( अनन्तरे चर्चरी )

गन्धोन्मादितमधुकरगीतै-
र्वाद्यमानैः परभृततूर्यैः ।
प्रसृतपवनोद्वेल्लितपल्लवनिकरः
सुललितविविधप्रकारैर्नृत्यति कल्पतरुः ॥ १२ ॥

( इति नाटित्वा ) अथवा न प्रत्यादिशामि यत्प्रावृषेण्यैरेव चिह्नैर्मम राजोपचारः संप्रति । कथमिव ?

विद्युल्लेखाकनकरुचिरं श्रीवितानं ममाभ्रं
व्याधूयन्ते निचुलतरुभिर्मञ्जरीचामराणि ।
घर्मच्छेदात्पटुतरगिरो बन्दिनो नीलकण्ठा
धारासारोपनयनपरा नैगमाश्चाम्बुवाहाः ॥ १३ ॥

भवतु । किमेवं परिच्छदश्लाघया यावदस्मिन्कानने प्रियामन्वेषयामि ।

( पुनश्चर्चरी पाठस्यान्ते भिन्नकः । )

दयिताराहितोऽधिकं दुःखितो
विरहानुगतः परिमन्थरः ।
गिरिकानने कुसुमोज्ज्वले
गजयूथपतिस्तथा क्षीणगतिः ॥ १४ ॥

( अनन्तरे द्विपदिकया परिक्रम्यावलोक्य च सहर्षम् ) हन्त ह व्यवासितस्य मे संदीपनमिव संवृत्तम् । कुतः ?

आरक्तराजिभिरियं कुसुमैर्नवकन्दली सलिलगर्भैः ।
कोपादन्तर्बाष्पे स्मरयति मां लोचने तस्याः ॥ १५ ॥

इतो गतेति कथं नु मया तत्रभवती सूचयितव्या ? यतः,

पद्भ्यां स्पृशेद्वसुमतीं यदि सा सुगात्री
मेघाभिवृष्टसिकतासु वनस्थलीषु ।
पश्चान्नता गुरुनितम्बतया ततोऽस्या
दृश्येत चारुपदपङ्क्तिरलक्तकाङ्का ॥ १६ ॥

( द्विपदिकया परिक्रम्यालोक्य च सहर्षम् ) उपलब्धमुपलक्षणं तस्याः कोपनाया मार्गोऽनुमीयते ।

हृतोष्ठरागैर्नयनोदबिन्दुभि-
निमग्ननाभेर्निपतद्भिरङ्कितम् ।
च्युतं रुषा भिन्नगतेरसंशयं
शुकोदरश्याममिदं स्तनांशुकम् ॥ १७ ॥

भवतु। आदास्ये तावत् । ( परिक्रम्य विभाव्य च, सास्रम् ) कथं सेन्द्रगोप नवशाद्वलमिदम् । तत्कुतोऽस्मिन्विपिने प्रियाप्रवृत्तिरवगमयितव्या ? ( विलोक्य ) अयमासारोच्छ्वसितशैलतटस्थलीपाषाणमाधिरूढः ।

आलोकयति पयोदान्प्रबलपुरोवातनर्तिताशिखण्डः ।
केकागर्भेण शिखी दूरोन्नमितेन कण्ठेन ॥ १८ ॥

( उपेत्य ) भवतु । यावदेनं पृच्छामि ।

( अनन्तरे खण्डकः । )

संप्राप्तखेदस्त्वरितं परवारणः ।
प्रियतमादर्शनलालसो गजवरो विस्मितमानसः ॥ १९ ॥

( तेन खण्डकान्ते चर्चरी । )

बर्हिण परमित्यभ्यर्थये आचक्ष्व मम ताम्
अत्रारण्ये भ्रमता यदि त्वया दृष्टा सा मम कान्ता ।
निशामय मृगाङ्कसदृशेन वदनेन हंसगतिः
अनेन चिह्नेन ज्ञास्यस्याख्यातं तव मया ॥ २० ॥

( चर्चरिकयोपविश्य, अञ्जलिं बद्ध्वा । )

नलिकण्ठ ममोत्कण्ठा वनेऽस्मिन्वानिता त्वया ।
दीर्घापाङ्गा सितापाङ्ग दृष्टा दृष्टिक्षमा भवेत् ॥ २१ ॥

( चर्चरिया विलोक्य ) कथमदत्त्वैव प्रतिवचनं नर्तितुं प्रवृत्तः । किं नु खलु हर्षकारणमस्य ? ( विचिन्त्य ) आं, ज्ञातम् ।

मृदुपवनविभिन्नो मत्प्रियाया विनाशा-
द्घनरुचिरकलापो निःसपत्नोऽस्य जातः ।
रतिविगलितबन्धे केशहस्ते सुकेश्याः
सति कुसुमसनाथे किं करोत्येष बर्हो ॥ २२ ॥

वतु । परव्यसननिर्वृतं न पुनरेनं पृच्छामि । (द्विपदिकया दिशोऽव-
क्य) अये, इयमातपान्तसंधुक्षितमदा जम्बूविटपमध्यास्ते परभृता ।
हेगेषु पण्डितैषा जातिः । यावदेनां पृच्छामि ।

(अनन्तरे खुरकः)

विद्याधरकाननलीनो दुःखविनिर्गतबाष्पोत्पीडः ।
दूरोत्सारितहृदयानन्दः अम्बरमानेन भ्रमति गजेन्द्रः ।
परभृते मधुरप्रलापिनि कान्ते नन्दनवने स्वच्छन्दं भ्रमन्ती ।
यदि परं प्रियतमा सा मम दृष्टा तदाचक्ष्व मम परपुष्टे ।

एतदेव नर्तित्वा वलन्तिकयोपसृत्य जानुभ्यां स्थित्वा ) भवति,

त्वां कामिनो मदनदूतिमुदाहरन्ति
मानावभङ्गनिपुणं त्वममोघमस्त्रम् ।
तामानय प्रियतमां मम वा समीपं
मां वा नयाशु कलभाषिणि यत्र कान्ता ॥ २५ ॥

( वामकेन किंचिद्वलित्वा । आकाशे । ) किमाह भवती ? कथं त्वामे-
वमनुरक्तं विहाय गतेति । श्रृणोतु भवती ।

कुपिता न तु कोपकारणं
सकृदप्यात्मगतं स्मराम्यहम् ।
प्रभुता रमणेषु योषितां
नहि भावस्खलितान्यपेक्षते ॥ २६ ॥

( ससंभ्रममुत्थाय अनन्तरं जानुभ्यां स्थित्वा 'कुपिता' इति पठित्वा विलोक्य च । )

कथं कथाविच्छेदकारिणी स्वकार्य एव व्यासक्ता ?

महदपि परदुःखं शीतलं सम्यगाहुः
प्रणयमगणयित्वा यन्ममापद्गतस्य ।
अधरमिव मदान्धा पातुमेषा प्रवृत्ता
फलमभिनवपाकं राजजम्बूद्रुमस्य ॥ २७ ॥

तदेवंगतेऽपि प्रियेव मे मञ्जुस्वनेति न मे कोपोऽस्याम् । सुखमास्तां भवती । साधयामस्तावत् । ( उत्थाय द्विपदिकया परिक्रम्यावलोक्य च ) अये, दक्षिणेन वनधारां प्रियाचरणनिक्षेपशंसी नूपुरशब्दः । यावदेनमनुगच्छामि । ( परिक्रम्य )

प्रियतमाविरहक्लान्तवदनः
अविरलबाष्पजलाकुलनयनः ।
दुःसहदुःखविसंष्ठुलगमनः
प्रसृतगुरुतापदीप्ताङ्गः ।
अधिकं दूनमानसो दरीं गतः
कानने परिभ्रमति गजेन्द्रः ॥ २८ ॥

( अनन्तरं द्विपदिकया दिशोऽवलोक्य । )

प्रियकरिणीवियुक्तो गुरुशोकानलदीप्तः ।
बाष्पजलाकुललोचनः करिवरो भ्रमति समाकुलः ॥ २९ ॥

( सकरुणम् ) हा धिक् कष्टम् ।

मेघश्यामा दिशो दृष्ट्वा मानसोत्सुकचेतसा ।
कूजितं राजहंसेन नेदं नूपुरशिञ्जितम् ॥ ३० ॥

भवतु । यावदेते मानसोत्सुकाः पतत्रिणः सरसोऽस्मान्नोत्पतन्ति त
देतेभ्यः प्रियाप्रवृत्तिरवगमयितव्या । ( वलन्तिकयोपसृत्य ) अहो ज
विहङ्गमराज,

पश्चात्सरः प्रतिगमिष्यसि मानसं त्वं
पाथेयमुत्सृज बिसं ग्रहणाय भूयः ।
मां तावदुद्धर शुचो दयिताप्रवृत्त्या
स्वार्थात्सतां गुरुतरा प्रणयिक्रियैव ॥ ३१ ॥

यथोन्मुखो विलोकयति मानसोत्सुकेन मया न लक्षितेत्येवं वचनमा

( उपविश्य चर्चरी । )

रे रे हंस किं गोप्यते ?

( इति नर्तित्वा उत्थाय । )

यदि हंस गता ते नतभ्रूः
सरसो रोधसि दृक्पथं प्रिया मे ।
मदखेलपदं कथं नु तस्याः
सकलं चोर गतं त्वया गृहीतम् ॥ ३२ ॥

( चर्चरी । )

गत्यनुसारेण मया लक्ष्यते ।

( चर्चरिकयोपसृत्याञ्जलिं बद्ध्वा )

हंस प्रयच्छ मे कान्तां गतिरस्यास्त्वया हृता ।
विभावितैकदेशेन देयं यदभियुज्यते ॥ ३३ ॥

( पुनश्चर्चरी )

कस्मात्त्वया शिक्षितमेतद्गतिलालस ।
सा परं दृष्टा जघनभरालसा ॥ ३४ ॥

( पुनश्चर्चरी। 'हंस, प्रयच्छ' इत्यादि पठित्वा द्विपदिकया निरूप्य। विहस्य।) एष स्तेनानुशासी राजेति भयादुत्पातितः। यावदन्यमवकाशमव-गाहिष्ये। ( द्विपदिकया परिक्रम्यावलोक्य। ) अये, प्रियासहायश्चक्र-वाकस्तिष्ठति। तावदेनं पृच्छामि।

( अनन्तरे कुटिलिका। )

मर्मरणितमनोहरे

( मल्लघट्टी। )

कुसुमिततरुवरपल्लविते।

( चर्चरी। )

दयिताविरहोन्मादितः

कानने भ्रमति गजेन्द्रः॥ ३५ ॥

( द्विलयान्तरे चर्चरी। )

गोरोचनाकुङ्कुमवर्ण चक्र भण माम्।
मधुवासरे क्रीडन्ती धन्या न दृष्टा त्वया॥ ३६ ॥

( चर्चरिकयोपसृत्य जानुभ्यां स्थित्वा। )

रथाङ्गनामन् वियुतो रथाङ्गश्रोणिबिम्बया।
अयं त्वां पृच्छति रथी मनोरथशतैर्वृतः॥ ३७ ॥

कथं कः क इत्याह। मा तावत्। न खलु विदितोऽहमस्य।

सूर्याचन्द्रमसौ यस्य मातामहपितामहौ।
स्वयं वृतः पतिर्द्वाभ्यामुर्वश्या च भुवा च यः॥ ३८ ॥

कथं तूष्णीं स्थितः? भवतु। उपालभे तावदेनम्। ( जानुभ्यां स्थित्वा ) युक्तं तावदात्मानुमानेन वर्तितुम्। कुतः?

सरसि नलिनीपत्रेणापि त्वमावृतविग्रहां
ननु सहचरीं दूरे मत्वा विरौषि समुत्सुकः।

इति च भवतो जायास्नेहात्पृथक्स्थितिभीरुता
मयि च विधुरे भावः कान्ताप्रवृत्तिपराङ्मुखः ॥ ३९ ॥

( उपविश्य ) सर्वथा मदीयानां भाग्यविपर्ययाणामयं प्रभावः यावदन्यमवकाशमवगाहिष्ये । ( द्विपदिकया परिक्रम्यावलोक्य च । ) अये,

इदं रुणाद्धि मां पद्ममन्तःक्वणितषट्पदम् ।
मया दष्टाधरं तस्याः ससीत्कारमिवाननम् ॥ ४० ॥

इतोगतस्यानुशयो मा भूदित्यस्मिन्नपि कमलसेविनि भ्रमरे प्रणयित्वं करिष्ये ।

मधुकर मदिराक्ष्याः शंस तस्याः प्रवृत्तिं
वरतनुरथवासौ नैव दृष्टा त्वया मे ।
यदि सुरभिमवाप्स्यस्तन्मुखोच्छ्वासगन्धं
तव रतिरभविष्यत्पुण्डरीके किमस्मिन् ॥ ४२ ॥

( इति द्विपदिकया परिक्रम्यावलोक्य च । ) अये, करिणिसहायो नागाधिराजो नीपस्कन्धनिषण्णहस्तस्तिष्ठति । यावदेनं गच्छामि ।

( कुलिका । )

करिणीविरहसंतापितः ।

( मन्दघटी । )

कानने गन्धोद्धतमधुकरः ॥ ४३ ॥

( अतोऽन्तरे विलोक्य । ) अथवा न तावदयमुपसर्पणकालः ।

अयमचिरोद्गतपल्लवमुपनीतं प्रियतमाग्रहस्तेन ।
अभिलेढु तावदासवसुरभिरसं शल्लकीभङ्गम् ॥ ४४ ॥

( स्थानकेनावलोक्य । ) अये, कृताह्निकः संवृत्तः । भवतु । समीपमस्य गत्वा पृच्छामि ।

तमश्रु नेत्रावरणं प्रमृज्य सीता विलापाद्विरता ववन्दे ।
तस्यै मुनिर्दोहदलिङ्गदर्शी दाश्वान्सुपुत्राशिषमित्युवाच ॥ ७१ ॥
जाने विसृष्टां प्रणिधानतस्त्वां मिथ्यापवादक्षुभितेन भर्त्रा ।
तन्मा व्यथिष्ठा विषयान्तरस्थं प्राप्तासि वैदेहि पितुर्निकेतम् ॥ ७२ ॥
उत्खातलोकत्रयकण्टकेऽपि सत्यप्रतिज्ञेऽप्यविकत्थनेऽपि ।
त्वां प्रत्यकस्मात्कलुषप्रवृत्तावस्त्येव मन्युर्भरताग्रजे मे ॥ ७३ ॥
तवोरुकीर्तिः श्वशुर सखा मे सतां भवोच्छेदकरः पिता ते ।
धुरि स्थिता त्वं पतिदेवतानां किं तन्न येनासि ममानुकम्प्या ७४
तपस्विसंसर्गविनीतसत्त्वे तपोवने वीतभया वसास्मिन् ।
इतो भविष्यत्यनघप्रसूतेरपत्यसंस्कारमयो विधिस्ते ॥ ७५ ॥
अशून्यतीरां मुनिसंनिवेशैस्तमोपहन्त्रीं तमसां वगाह्य ।
तत्सैकतोत्सङ्गबलिक्रियाभिः संपत्स्यते ते मनसः प्रसादः ॥ ७६ ॥
पुष्पं फलं चार्तवमाहरन्त्यो बीजं च बालेयमकृष्टरोहि ।
विनोदयिष्यन्ति नवाभिषङ्गामुदारवाचो मुनिकन्यकास्त्वाम् ॥ ७७ ॥
पयोघटैराश्रमबालवृक्षान्संवर्धयन्ती स्वबलानुरूपैः ॥
असंशयं प्राक्तनयोपपत्तेः स्तनंधयप्रीतिमवाप्स्यसि त्वम् ॥ ७८ ॥
अनुग्रहप्रत्यभिनन्दिनीं तां वाल्मीकिरादाय दयार्द्रचेताः ।
सायं मृगाध्यासितवेदिपार्श्वं स्वमाश्रमं शान्तमृगं निनाय ॥ ७९ ॥
तामर्पयामास च शोकदीनां तदागमप्रीतिषु तापसीषु ।
निर्विष्टसारां पितृभिर्हिमांशोरन्त्यां कलां दर्श इवौषधीषु ॥ ८० ॥
ता इङ्गुदीस्नेहकृतप्रदीपमास्तीर्णमेध्याजिनतल्पमन्तः ।
तस्यै सपर्यानुपदं दिनान्ते निवासहेतोरुटजं वितेरुः ॥ ८१ ॥

तत्राभिषेकप्रयता वसन्ती प्रयुक्तपूजा विधिनातिथिभ्यः ।
वन्येन सा वल्कलिनी शरीरं पत्युः प्रजासंततये बभार ॥ ८२ ॥

अपि प्रभुः सानुशयोऽधुना स्यात्किमुत्सुकः शक्रजितोऽपिहन्ता ।
शशंस सीतापरिदेवनान्तमनुष्ठितं शासनमग्रजाय ॥ ८३ ॥

बभूव रामः सहसा सबाष्पस्तुषारवर्षीव सहस्यचन्द्रः ।
कौलीनभीतेन गृहान्निरस्ता न तेन वैदेहसुता मनस्तः ॥ ८४ ॥

निगृह्य शोकं स्वयमेव धीमान्वर्णाश्रमावेक्षणजागरूकः ।
स भ्रातृसाधारणभोगमृद्धं राज्यं रजोरिक्तमनाः शशास ॥८५॥

तमेकभार्यां परिवादभीरोः साध्वीमपि त्यक्तवतो नृपस्य ।
वक्षस्यसंघट्टसुखं वसन्ती रेजे सपत्नीरहितेव लक्ष्मीः॥ ८६ ॥

सीतां हित्वा दशमुखरिपुर्नोपयेमे यदन्यां
तस्या एव प्रतिकृतिसखो यत्क्रतूनाजहार ।
वृत्तान्तेन श्रवणविषयप्रापिणा तेन भर्तुः
सा दुर्वारं कथमपि परित्यागदुःखं विषेहे ॥ ८७ ॥

—रघुवंशे चतुर्दशः सर्गः ।



## अर्थान्तरन्यासाः ।

Proverbial Sayings in the works of Kalidas which show his great mastery over generalising from particular instances and vice versa and establish his claim as a great teacher of morals and as an interpreter of human nature.

# शाकुन्तलम् ।

बलवदपि शिक्षितानामात्मन्यप्रत्ययं चेतः ॥ १. २ ॥

भवितव्यानां द्वाराणि भवन्ति सर्वत्र ॥ १. १४ ॥

किमिव हि मधुराणां मण्डनं नाकृतीनाम् । ॥ १. १७ ॥

सतां हि सन्देहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः॥१. १९॥

अकृतार्थेऽपि मनसिजे रतिमुभयप्रार्थना कुरुते ॥ २. १ ॥

कामी स्वतां पश्यति ॥ २. २ ॥

लभेत वा प्रार्थयिता न वा श्रियं
श्रिया दुरापः कथमीप्सितो भवेत् ॥ ३. ११ ॥

इष्टप्रवासजनितान्यबलाजनस्य
दुःखानि नूनमतिमात्रसुदुःसहानि ॥ ४. २ ॥

पीड्यन्ते गृहिणः कथं नु तनयाविश्लेषदुःखैर्नवैः ॥ ४. ५ ॥

गुर्वपि विरहदुःखमाशाबन्धः साहयति ॥ ४. १५ ॥

अनुभवति हि मूर्ध्ना पादपस्तीव्रमुष्णं
शमयति परितापं छायया संश्रितानाम् ॥ ५. ७ ॥

अनुद्धताः सत्पुरुषाः समृद्धिभिः
स्वभाव एवैष परोपकारिणाम् ॥ ५. १२ ॥

स्त्रीणामशिक्षितपटुत्वममानुषीषु
संदृश्यते किमुत याः प्रतिबोधवत्यः ।
प्रागन्तरिक्षगमनात्स्वमपत्यजात-
मन्यैर्द्विजैः परभृताः खलु पोषयन्ति ॥ ५. २२ ॥

उपपन्ना हि दारेषु प्रभुता सर्वतोमुखी ॥ ५. २६ ॥

शिनां हि परपरिग्रहसंश्लेषपराङ्मुखी वृत्तिः ॥ ५. २८ ॥
मनोरथानामतटप्रपाताः ॥ ६. १० ॥
स्रोतोवहां पथि निकामजलामतीत्य
जातः सखे प्रणयवान्मृगतृष्णिकायाम् ॥ ६. १६ ॥
हंसो हि क्षीरमादत्ते तन्मिश्रा वर्जयत्यपः ॥ ६. २८ ॥
ज्वलति चलितेन्धनोऽग्नि-
विप्रकृतः पन्नगः फणां कुरुते ।
प्रायः स्वं महिमानं
क्षोभात्प्रतिपद्यते जन्तुः ॥ ६. ३१ ॥
किं वाभविष्यदरुणस्तमसां विभेत्ता
तं चेत्सहस्रकिरणो धुरि नाकरिष्यत् ॥ ७. ४ ॥
स्रजमपि शिरस्यन्धः क्षिप्तां धुनोत्यहिशङ्कया ॥ ७. २४ ॥
गण्डस्योपरि पिटिका संवृत्ता ।
कुतः किल स्वयमक्षिणी आकुलीकृत्याश्रुकारणं पृच्छसि ।
सर्वः कान्तमात्मीयं पश्यति ।
पिण्डखर्जूरैरुद्वेजितस्य तिन्तिण्यामभिलाषो भवेत् ।
विकारं खलु परमार्थतोऽज्ञात्वानारम्भः प्रतीकारस्य ।
स्निग्धजनसंविभक्तं खलु दुःखं सह्यवेदनं भवति ।
सागरमुज्झित्वा कुत्र वा महानद्यवतरति ।
क इदानीं सहकारमन्तरेण पल्लवितामतिमुक्तलतामर्हति ।
को वा शरीरनिर्वापयित्रीं शारदीं ज्योत्स्नां पटान्तेन निवारयिष्यति ।
अहो विघ्नवत्यः प्रार्थितार्थसिद्धयः ।

को नामोष्णोदकेन नवमालिकां सिञ्चति ।

दिष्ट्या धूमावरुद्धदृष्टेरपि यजमानस्य पावक एवाहुतिः पतिता ।

न खलु धीमतां कश्चिदविषयो नाम ।

अतिस्नेहः पापशङ्की ।

अविश्रमोऽयं लोकतन्त्राधिकारः ।

सर्वः प्रार्थितमर्थमधिगम्य सुखी संपद्यते जन्तुः ।

अनिर्वर्णनीयं परकलत्रम् ।

प्रत्युत्पन्नमति स्त्रैणम् ।

आत्मकृतं चापलमप्रतिहतं दहति ।

नन्ववसरोपसर्पणीया राजानः ।

एष नामानुगृहीतः यः शूलादवतार्य हस्तिस्कन्धे प्रतिष्ठापितः ।

उत्सवप्रियाः खलु मानुषाः ।

अहो सर्वास्ववस्थासु रमणीयत्वमाकृतिविशेषाणाम् ।

रन्ध्रोपनिपातिनोऽनर्थाः ।

भवितव्यता खलु बलवती ।

न कदापि सत्पुरुषाः शोकपात्रात्मानो भवन्ति ।

ननु प्रवातेऽपि निष्कम्पा गिरयः ।

कः पतिदेवतामन्यः परामर्ष्टुमुत्सहते ।

न खलु मातापितरौ भर्तृवियोगदुःखितां दुहितरं द्रष्टुं पारयतः ।

अवश्यंभाविनोऽचिन्तनीयः समागमो भवति ।

एषोऽत्रभवान्नदीमतिक्रम्य मृगतृष्णिकायां संक्रान्तः ।

सति खलु दीपे व्यवधानदोषेणैषोऽन्धकारमनुभवति ।

उत्सर्पिणी खलु महतां प्रार्थना ।

अन्याय्यः परदाराणां व्यवहारः ।

# विक्रमोर्वशीयम् ।

अहो नु खलु दुर्लभाभिनिवेशी मदनः ।

अतिस्नेहः खलु कार्यदर्शी ।

नास्त्यगतिर्मनोरथानाम् ।

ननु प्रथमं मेघराजिर्दृश्यते, पश्चाद्विद्युल्लता ।

सर्वत्र प्रमादी वैधेयः ।

लोप्त्रेण गृहीतस्य कुम्भीलकस्यास्ति वा प्रतिवचनम् ।

न खल्वक्षिदुःखितोऽभिमुखे दीपशिखां सहते ।

भवितव्यतानुविधायीनि बुद्धीन्द्रियाणि ।

सर्वत्रौदरिकस्याभ्यवहार्यमेव विषयः ।

शक्यमाशाबन्धेनात्मानं धारयितुम् ।

अन्यसंक्रान्तप्रेमाणो नागरका अधिकं दक्षिणा भवन्ति ।

न युक्तं सुभाषितं प्रत्याचरितुम् ।

छिन्नबन्धे मत्स्ये पलायिते निर्विण्णो धीवरो भणति, धर्मो भविष्यतीति ।

दूरारूढः खलु प्रणयोऽसहनः ।

नास्ति विधेरलङ्घनीयम् ।

अये परावृत्तभागधेयानां दुःखं दुःखानुबन्धि ।

परिभवास्पदं दशाविपर्ययः ।

को देवतारहस्यानि तर्कयिष्यति ।

वसुधाधरकन्दराभिसर्पी
प्रतिशब्दोऽपि हरेर्भिनत्ति नागान् ॥ १. १९ ॥

यदेवोपनतं दुःखात्सुखं तद्रसवत्तरम् ।
निर्वाणाय तरुच्छाया तप्तस्य हि विशेषतः ॥ ३. २१ ॥
स्वार्थात्सतां गुरुतरा प्रणयिक्रियैव ॥ ४. १९ ॥
विभावितैकदेशेन स्तेयं यदभियुज्यते ॥ ४. १७ ॥

---

## मालविकाग्निमित्रम् ।

नन्वाकृतिविशेषेष्वादरः पदं करोति ।

कामं खलु सर्वस्य कुलविद्या बहुमता ।

पत्तने सति ग्रामे रत्नपरीक्षा ।

अन्योन्यकलहितयोर्मत्तहस्तिनोरेकतरस्मिन्ननिर्जिते कुत उपशमः ।

विनेतुरद्रव्यपरिग्रहोऽपि बुद्धिलाघवं प्रकाशयति ।

अपरिनिष्ठितस्योपदेशस्यान्याय्यं प्रदर्शनम् ।

सर्वज्ञस्याप्येकाकिनो निर्णयाभ्युपगमो दोषाय ।

सुशिक्षितोऽपि न सर्व उपदेशदर्शने निपुणो भवति ।

उपस्थितं नयनमधु संनिहितमक्षिकं च ।

अहो सर्वास्ववस्थास्वनवद्यता रूपस्य ।

अहो सर्वास्ववस्थासु चारुता शोभान्तरं पुष्यति ।

मया नाम शुष्कघनगर्जितेऽन्तरिक्षे जलपानमिच्छता चातकायितम् ।

पण्डितपरितोषप्रत्यया ननु मूढा जातिः ।

साधु । त्वं दरिद्र आतुर इम वैद्येनोपनीयमानमौषधमिच्छसि ।

उचितवेलातिक्रमे चिकित्सका दोषमुदाहरन्ति ।

निसर्गनिपुणाः स्त्रियः ।

न हि कमलिनीं दृष्ट्वा ग्राहमवेक्षते मतङ्गजः ।

मदः किल स्त्रीजनस्य सविशेषं मण्डनम् ।

चूताङ्कुरं विचिन्वत्योरावयोः पिपीलिकाभिर्दष्टम् ।

अनुरागोऽनुरागेण परीक्षितव्यः ।

भ्रमरसंबाध इति वसन्तावतारसर्वस्वभूतः किं न चूतप्रसवे वतंसनीयः ।

न शोभते प्रणयिजने निरपेक्षता ।

अविषोऽपि कदाचिद्दंशो भवेत् ।

कुतूहलवानपि निसर्गशालीनः स्त्रीजनः ।

रमणीयः खलु नवाङ्गनानां मदनाविषयावतारः ।

किं नु खलु दर्दुरा व्याहरन्तीति देवः पृथिवीं वर्षितुं स्मरति

बन्धनस्थितो गृहकपोतको बिडालिकालोके पतितः ।

आगामि सुखं वा दुःखं वा हृदयं समर्थीकरोति ।

चन्दनं खलु मया पादुकापरिभोगेण दूषितम् ।

अहो परिभवोपहारिणो विनिपाताः ।

सर्वोऽपि नववरो लज्जातुरो भवति ।

पुराणमित्येव न साधु सर्वं
न चापि काव्यं नवमित्यवद्यम् ।
सन्तः परीक्ष्यान्यतरद्भजन्ते
मूढः परप्रत्ययनेयबुद्धिः ॥ १. २ ॥

पात्रविशेषन्यस्तं गुणान्तरं व्रजति शिल्पमाधातुः ।
जलमिव समुद्रशुक्तौ मुक्ताफलतां पयोदस्य ॥ १. ६ ॥

अर्थं सप्रतिबन्धं प्रभुरधिगन्तुं सहायवानेव ।
दृश्यं तमसि न पश्यति दीपेन विना सचक्षुरपि ॥ १. ९ ॥

लब्धास्पदोऽस्मीति विवादभीरो-
स्तितिक्षमाणस्य परेण निन्दाम् ।
यस्यागमः केवलजीविकायै
तं ज्ञानपण्यं वणिजं वदन्ति ॥ १. १७ ॥

प्रायः समानविद्याः परस्परयशःपुरोभागाः ॥ १. २० ॥

मन्दोऽप्यमन्दतामेति संसर्गेण विपश्चितः ।
पङ्कच्छिदः फलस्येव निकषेणाविलं पयः ॥ २. ७ ॥

उपदेशं विदुः शुद्धं सन्तस्तमुपदेशिनः ।
श्यामायते न युष्मासु यः काञ्चनमिवाग्निषु ॥ २. ९ ॥

स्थाने प्राणाः कामिनां दूत्यधीनाः ॥ ३. १४ ॥

न हि बुद्धिगुणेनैव सुहृदामर्थदर्शनम् ।
कार्यसिद्धिपथः सूक्ष्मः स्नेहेनाप्युपलक्ष्यते ॥ ४. ६ ॥

प्रतिपक्षेणापि पतिं
सेवन्ते भर्तृवत्सलाः साध्व्यः ।
अन्यसरितां शतानि हि
समुद्रगाः प्रापयन्त्यब्धिम् ॥ ५. १९ ॥

# रघुवंशः ।

हेम्नः संलक्ष्यते ह्यग्नौ विशुद्धिः श्यामिकापि वा ॥ १. १०
सहस्रगुणमुत्स्रष्टुमादत्ते हि रसं रविः ॥ १. १८ ॥
संततिः शुद्धवंश्या हि परत्रेह च शर्मणे ॥ १. ६९ ॥
प्रतिबध्नाति हि श्रेयः पूज्यपूजाव्यतिक्रमः ॥ १. ७९ ॥
भक्त्योपपन्नेषु हि तद्विधानां
प्रसादचिह्नानि पुरःफलानि ॥ २. २२ ॥
न पादपोन्मूलनशक्ति रंहः
शिलोच्चये मूर्च्छति मारुतस्य ॥ २. ३४ ॥
अल्पस्य हेतोर्बहु हातुमिच्छ-
न्विचारमूढः प्रतिभासि मे त्वम् ॥ २. ४७ ॥
पथः श्रुतेर्दर्शयितार ईश्वरा
मलीमसामाददते न पद्धतिम् ॥ ३. ४६ ॥
पदं हि सर्वत्र गुणैर्निधीयते ॥ ३. ६२ ॥
प्रणिपातप्रतीकारः संरम्भो हि महात्मनाम् ॥ ४. ६४ ॥
आदानं हि विसर्गाय सतां वारिमुचामिव ॥ ४. ८६ ॥
सूर्ये तपत्यावरणाय दृष्टेः
कल्पेत लोकस्य कथं तमिस्रा ॥ ५. १३ ॥
पर्यायपीतस्य सुरैर्हिमांशोः
कलाक्षयः श्लाघ्यतरो हि वृद्धेः ॥ ५. १६ ॥
......................निर्गलिताम्बुगर्भं
शरद्घनं नार्दति चातकोऽपि ॥ ५. १७ ॥
......................भिन्नरुचिर्हि लोकः ॥ ६. ३० ॥

न हि प्रफुल्लं सहकारमेत्य
वृक्षान्तरं काङ्क्षति षट्पदालिः ॥ ६. ६९ ॥
रत्नं समागच्छतु काञ्चनेन ॥ ६. ७९ ॥
मनो हि जन्मान्तरसंगतिज्ञम् ॥ ७. १५ ॥
धूमो निवर्त्येत समीरणेन
यतस्तुकक्षस्तत एव वह्निः ॥ ७. ५५ ॥
प्रतिकारविधानमायुषः
सति शेषे हि फलाय कल्पते ॥ ८. ४० ॥
अभितप्तमयोऽपि मार्दवं
भजते कैव कथा शरीरिषु ॥ ८. ४३ ॥
विषमप्यमृतं क्वचिद्भवे-
दमृतं वा विषमीश्वरेच्छया ॥ ८. ४६ ॥
परलोकजुषां स्वकर्मभि-
र्गतयो भिन्नपथा हि देहिनाम् ॥ ८. ८५ ॥
मरणं प्रकृतिः शरीरिणां
विकृतिर्जीवितमुच्यते बुधैः ।
क्षणमप्यवतिष्ठते श्वस-
न्यदि जन्तुर्ननु लाभवानसौ ॥ ८. ८७ ॥
द्रुमसानुमतां किमन्तरं
यदि वायौ द्वितयेऽपि ते चलाः ॥ ८. ९० ॥
अपथे पदमर्पयन्ति हि
श्रुतवन्तोऽपि रजोनिमीलिताः ॥ ९. ७४ ॥
कृष्यां दहन्नपि खलु क्षितिमिन्धनेद्धो
बीजप्ररोहजननीं ज्वलनः करोति ॥ ९. ८० ॥

अप्याक्षेपो भविष्यन्त्याः कार्यसिद्धेर्हि लक्षणम् ॥ १०. ६ ॥
तेजसां हि न वयः समीक्ष्यते ॥ ११. १ ॥
पावकस्य महिमा स गण्यते
कक्षवज्ज्वलति सागरेऽपि यः ॥ ११. ७५ ॥
खातमूलमनिलो नदीरयैः
पातयत्यपि मृदुस्तटद्रुमम् ॥ ११. ७६ ॥
निर्जितेषु तरसा तरस्विनां
शत्रुषु प्रणतिरेव कीर्तये ॥ ११. ८९ ॥
अत्यारूढो हि नारीणामकालज्ञो मनोभवः ॥ १२ ३३ ॥
काले खलु समारब्धाः फलं बध्नन्ति नीतयः ॥ १२. ६९ ॥
अपि स्वदेहात्किमुतेन्द्रियार्था-
द्यशोधानानां हि यशो गरीयः ॥ १४. ३५ ॥
छाया हि भूमेः शशिनो मलत्वे-
नारोपिता शुद्धिमतः प्रजाभिः ॥ १४. ४० ॥
आज्ञा गुरूणां ह्यविचारणीया ॥ १४. ४३ ॥
त्राणाभावे हि शापास्त्राः कुर्वन्ति तपसो व्ययम् ॥ १५. ३ ॥
धर्मसंरक्षणार्थैव प्रवृत्तिर्भुवि शार्ङ्गिणः ॥ १५. १४ ॥
वयोरूपविभूतीनामेकैकं मदकारणम् ॥ १७. ४३ ॥
न हि सिंहो गजास्कन्दी भयाद्गिरिगुहाशयः ॥ १७. ५२ ॥
अम्बुगर्भो हि जीमूतश्चातकैरभिनन्द्यते ॥ १७. ६० ॥
स्वादुभिस्तु विषयैर्हृतस्ततो
दुःखमिन्द्रियगणो निवार्यते ॥ १९. ४९ ॥

---

# कुमारसंभवः ।

एको हि दोषो गुणसंनिपाते
निमज्जतीन्दोः किरणेष्विवाङ्कः ॥ १. ३ ॥

क्षुद्रेऽपि नूनं शरणं प्रपन्ने
ममत्वमुच्चैः शिरसां सतीव ॥ १. १२ ॥

अभ्यर्थनाभङ्गभयेन साधु
र्माध्यस्थ्यमिष्टेऽप्यवलम्बतेऽर्थे ॥ १. ५२ ॥

विकारहेतौ सति विक्रियन्ते
येषां न चेतांसि त एव धीराः ॥ १.५९ ॥

शाम्येत्प्रत्यपकारेण नोपकारेण दुर्जनः ॥ २. ४० ॥

प्रयोजनापेक्षितया प्रभूणां
प्रायश्चलं गौरवमाश्रितेषु ॥ ३. १ ॥

अप्यप्रसिद्धं यशसे हि पुंसा-
मनन्यसाधारणमेव कर्म ॥ ३. १९ ॥

प्रायेण सामग्र्यविधौ गुणानां
पराङ्मुखी विश्वसृजः प्रवृत्तिः ॥ ३. २८ ॥

आत्मेश्वराणां न हि जातु विघ्नाः
समाधिभङ्गप्रभवो भवन्ति ॥ ३. ४० ॥

न हीश्वरव्याहृतयः कदाचि-
त्पुष्णन्ति लोके विपरीतमर्थम् ॥ ३. ६३ ॥

स्वजनस्य हि दुःखमग्रतो
विवृतद्वारमिवोपजायते ॥ ४. २६ ॥

दयितास्वनवस्थितं नृणां
न खलु प्रेम चलं सुहृज्जने ॥ ४. २८ ॥
प्रियेषु सौभाग्यफला हि चारुता ॥ ५. १ ॥
क ईप्सितार्थस्थिरनिश्चयं मनः
पयश्च निम्नाभिमुखं प्रतीपयेत् ॥ ५. ५ ॥
न षट्पदश्रेणिभिरेव पङ्कजं
सशैवलासङ्गमपि प्रकाशते ॥ ५. ९ ॥
न धर्मवृद्धेषु वयः समीक्ष्यते ॥ ५. १६ ॥
भवन्ति साम्येऽपि निविष्टचेतसां
वपुर्विशेषेष्वतिगौरवाः क्रियाः ॥ ५. ३१ ॥
शरीरमाद्यं खलु धर्मसाधनम् ॥ ५. ३३ ॥
न रत्नमन्विष्यति मृग्यते हि तत् ॥ ५. ४५ ॥
मनोरथानामगतिर्न विद्यते ॥ ५. ६४ ॥
अपेक्ष्यते साधुजनेन वैदिकी
श्मशानशूलस्य न यूपसत्क्रिया ॥ ५ ७३ ॥
अलोकसामान्यमचिन्त्यहेतुकं
द्विषन्ति मन्दाश्चरितं महात्मनाम् ॥ ५. ७५ ॥
न कामवृत्तिर्वचनीयमीक्षते ॥ ५. ८२ ॥
न केवलं यो महतोऽपभाषते
शृणोति तस्मादपि यः स पापभाक् ॥ ५. ८३ ॥
क्लेशः फलेन हि पुनर्नवतां विधत्ते ॥ ५. ८६ ॥
स्त्री पुमानित्यनास्थैषा वृत्तं हि महितं सताम् ॥ ६. १२

क्रियाणां खलु धर्म्याणां सत्पत्न्यो मूलकारणम् ॥ ६. १३ ॥

प्रायः प्रत्ययमाधत्ते स्वगुणेषूत्तमादरः ॥ ६. २० ॥

विक्रियायै न कल्पन्ते संबन्धाः सदनुष्ठिताः ॥ ६. २९ ॥

यदध्यासितमर्हद्भिस्तद्धि तीर्थं प्रचक्षते ॥ ६. ५६ ॥

विनियोगप्रसादा हि किंकराः प्रभविष्णुषु ॥ ६. ६२ ॥

अशोच्या हि पितुः कन्या सद्भर्तृप्रतिपादिता ॥ ६. ७९ ॥

प्रायेण गृहिणीनेत्राः कन्यार्थेषु कुटुम्बिनः ॥ ६. ८५ ॥

भवन्त्यव्यभिचारिण्यो भर्तुरिष्टे पतिव्रताः ॥ ६. ८६ ॥

स्त्रीणां प्रियालोकफलो हि वेषः ॥ ७. २२ ॥

कालप्रयुक्ता खलु कार्यविद्भि-
र्विज्ञापना भर्तृषु सिद्धिमेति ॥ ७. ९३ ॥

विक्रिया न खलु कालदोषजा
निर्मलप्रकृतिषु स्थिरोदया ॥ ८. ६५ ॥

नूनमात्मसदृशी प्रकल्पिता
वेधसैव गुणदोषयोर्गतिः ॥ ८. ६६ ॥

कार्येष्ववश्यकार्येषु सिद्धये क्षिप्रकारिता ॥ १०. २५ ॥

मुदे न हृद्या किमु बालकेलिः ॥ ११. ४० ॥

प्रभुप्रसादो हि मुदे न कस्य ॥ १२. ३२ ॥

भवन्ति वाचोऽवसरे प्रयुक्ता
ध्रुवं फलाविष्टमहोदयाय ॥ १२. ४३ ॥

न कस्य वीर्याय वरस्य संगतिः ॥ १९. ५१ ॥

# मेघदूतम् ।

याञ्चा मोघा वरमधिगुणे नाधमे लब्धकामा ॥ ६ ॥

आशाबन्धः कुसुमसदृशं प्रायशो ह्यङ्गनानां
सद्यःपाति प्रणयि हृदयं विप्रयोगे रुणद्धि ॥ १० ॥

न क्षुद्रोऽपि प्रथमसुकृतापेक्षया संश्रयाय
प्राप्ते मित्रे भवति विमुखः किं पुनर्यस्तथोच्चैः ॥ १७ ॥

रिक्तः सर्वो भवति हि लघुः पूर्णता गौरवाय ॥ २० ॥

स्त्रीणामाद्यं प्रणयवचनं विभ्रमो हि प्रियेषु ॥ २८ ॥

मन्दायन्ते न खलु सुहृदामभ्युपेतार्थकृत्याः ॥ ३८ ॥

आपन्नार्तिप्रशमनफलाः संपदो ह्युत्तमानाम् ॥ ५३ ॥

के वा न स्युः परिभवपदं निष्फलारम्भयत्नाः ॥ ५४ ॥

संकल्पन्ते स्थिरगणपदप्राप्तये श्रद्दधानाः ॥ ५५ ॥

सूर्यापाये न खलु कमलं पुष्यति स्वामभिख्याम् ॥ १७ ॥

प्रायः सर्वो भवति करुणावृत्तिरार्द्रान्तरात्मा ॥ ३० ॥

नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेण ॥ ४६ ॥

स्नेहानाहुः किमपि विरहे ध्वंसिनस्ते त्वयोगा–
दिष्टे वस्तुन्युपचितरसाः प्रेमराशीभवन्ति ॥ ४९ ॥

# APPENDIX A.

The following is a summary of the Pratyabhijna philosophy of Kashmir, as given by Pandit Lachhmidhar Kalla in his lectures on the "Birthplace" of Kalidas.

According to the Pratyabhijna philosophy, there is only one existence, [a] self or 'Sadā Siva', which may be described as having two aspects, transcendent and immanent, or Siva and Sakti, which are one in their essence, and are but two aspects of the same reality. [b] They are eternally related together like word and its meaning. [c] Sakti works in a variety of modes and has every hold on Siva. Indeed Sakti is Siva himself. [d] With his Sakti thus Siva manifests himself as the universe and he does this out of his free-will, without use of any other material: Universe is expansion out of the perfect freedom of God. [e] The process of manifestation is technically known as the Ābhās or reflection of Sakti [f] on Siva as distinguished from the 'Vivarta' doctrine of the vedantins. [g] According to the Vivarta doctrine, the appearances are not real as they are non-existent in the supreme reality; while according to the 'Ābhās doctrine, the appearances are real in the sense that they are aspects of ultimate reality or परमशिव in whom they exist in the highly synthesized form as the experienced. The Ābhās and the the Vivarta doctrines both try to explain the phenomenon of diversity in unity but to the 'Vivarta' this apparent division is of no consequence while to the 'Ābhās' it is apparently a source of strengthening to the whole.

Thus Siva who in his supreme freedom and joy wills to create this universe, brings into operation his Sakti, which acts as the principle of Negation of the subjective idea, and brings out the objective reality, the 'Srishti'.[h] By the necessity of his own creative power, Siva who is all along perfect freedom and light also limits himself as the individual soul or 'Jiva'— Siva *forgets* his own Sakti in the Jiva-State which is the result of his own free-will to create.[i] The creative Sakti acts as force of obscuration in order to create many out of the one. This aspect of the Sakti is technically known as तिरोधान or पिधान or Maya not in its vedantic sense as mere illusion but the *activity* which produces forgetfulness of the real nature of self.[j] In other words विस्मृति takes place on part of Siva of his own Sakti: or the reflection of Sakti on Siva is bedimmed. But the force of obscuration cannot be of a permanent character, it is only a temporary phase, though a neccessary one, in the course of evolution. It vanishes when the course of involution begins, or technically speaking when the अनुग्रह aspect of Sakti reacts upon it.[k] Realization of Sakti as belonging to self takes place through the method of recognition, or in other words, realization of the identity of self with God takes place through *recognition* of the Divine nature of self. *Recognition* is the only way to self-realization.[l] Recognition or प्रत्यभिज्ञान takes place by some potent means such as that of the instruction of the Guroo or the study of the अध्यात्मदर्शन—the power of contemplation on self or once own *Pratyaya*: thus recognition ends in self-realization.[m] Sakti is reflected in the pure light of Siva, or in other words, Siva regains his Sakti. Self-realization takes place or union by recognition is attained. The experience thus gained is not lost

but is "synthetically" related to the divine experiencer. *Union* by *recognition* or the प्रत्यभिज्ञान is thus the chief essence of this system of philosophy. *

After gainig recognition what is left for one is to do good to others for "there is no divine curse on man that he should only be actuated by personal motives." The Pratyabhijna doctrine is preached for the good of mankind irrespective of caste, colour, creed or sex. The student should approach this philosophy as 'Dāsa' to whom it will be given free out of its abundance. *

# APPENDIX B.

# KALIDASA AND MUSIC.

BY

SARDAR G. N. MUJUMDAR, POONA.

Much has been said about Kālidāsa by both Western and Eastern scholars with regard to the different aspects of his works, such as the Alankāras, the religion, the philosophy etc. contained in his works. But no one has, as far as I know, dealt with Kālidāsa's music. This is my humble attempt to lay before this learned assembly a critical review of his seven works viz. Raghuvamsa, Kumārasambhava, Meghadūta, Rtusambāra, Abhijnānasākuntala, Mālavikāgnimitra and Vikramorvasiya, considered from the musical point of view.

I deal with this subject in its three aspects: (A) vocal music, (B) instrumental music and (C) dancing.

## (A) VOCAL MUSIC.

1. Kālidāsa seems to have a good musical ear. While describing the sweetness of Pārvati's voice he records his own experience of the harsh and disagreeable sound of a discordant Veenā.[1]

2. Kālidāsa was a musician. He knew several Rāgas. In Kumārasambhava he says that Siva was awakened by the Kinnaras, who sang to him the कैशिक Rāga by means of several

1 स्वरेण तस्याममृतस्रुतेव प्रजल्पितायामभिजातवाचि ।
अप्यन्यपुष्टा प्रतिकूलशब्दा श्रोतुर्वितन्त्रीरिव ताड्यमाना ॥

—कुमार० I.45.

मूर्च्छनाs[2]. Names of three other Rāgas—भिन्नक, वलन्तिका and ककुभ occur in Vikramorvasiya IV.[3] I the Sākuntala In and V he mentions Rāga as a general term.[4]

3. Kālidāsa gives the idea of the serial stages of practising music, and of the formalities essential for a musician.

(A) He implies that a drone (= tonic) is necessary for a singer to base his song upon. The accompaniment of the flute to the song is also suggested.[5]

---

2 स व्यबुध्यत बुधस्तवोचितः शातकुम्भकमलाकरैः समम् ।
मूर्च्छनापरिगृहीतकैशिकैः किंनरैरुषसि गीतमङ्गलः ॥

—कुमार० VIII. 85.

3 पाटस्यान्ते भिन्नकः ।—विक्रमो० । IV.
एतदेव नर्तित्वा वलन्तिकयोपसृत्य जानुभ्यां स्थित्वा ।

—विक्रमो० IV.

इति ककुभेन षड्डपभङ्गाः ।—विक्रमो० IV.

4 सूत्रधारः—आर्ये, साधु गीतम् । अहो रागाबद्धचित्तवृत्तिरालिखित इव सर्वतो रङ्गः ।—शाकु० I.
सूत्रधारः—तवास्मि गीतरागेण हारिणा प्रसभं हृतः ।—शाकु० I.
राजा—अहो रागपरिवाहिणी गीतिः ।—शाकु० V.

5 यः पूरयन् कीचकरन्ध्रभागान्दरीमुखोत्थेन समीरणेन ।
उद्गास्यतामिच्छति किंनराणां तानप्रदायित्वमिवोपगन्तुम् ॥

—कुमार० I. 8.

स कीचकैर्मारुतपूर्णरन्ध्रैः कूजद्भिरापादितवंशकृत्यम् ।
शुश्राव कुञ्जेषु यशः स्वमुच्चैरुद्गीयमानं वनदेवताभिः ॥

—रघु० II. 12.

(B) In वर्णपरिचयं करोति he certainly tells us how a musician has to practise the notes, such as:—सा—रे, सासा—रेरे, सारेसा—रेगरे, सरेग,—रेगमा, सग—रेमा, सगरे—रेमाग, सरेगमा—रेगमाप.[6] etc. etc.

(C) By उपगानं—उपोह्नं—कृत्वा Kālidāsa wants to show that a musician should first sing the notes of the mode (=rāga) to which the proposed song in set.[7]

(D) वस्तु गायति means that Mālavikā after singing the notes of its mode sings the piece or song "दुल्लहो...". The Vastu means what is now generally called चीज in Marathi. We find several such Prākṛta Vastus in Bharata's Nāṭyashāstra and three in Sangeeta Ratnākara. In the works of Kālidāsa there are such Prākṛta pieces (Vastus)—one in the Mālavikāgnimitra, three in the Sākuntala and thirty-one in the Vikramorvashiya. As ancient original songs these are really most valuable with regard to music. In appendix No. 2 are given all these 35 Vastus.[8]

---

विदूषकः—भो वयस्य, संगीतशालाभ्यन्तरेऽवधानं देहि । कलविशुद्धाया गीतेः स्वरसंयोगः श्रूयते । जाने तत्रभवती हंसपादिका वर्णपरिचयं करोतीति ।

—शाकु० V.

7 मालविका—( उपगानं–उपोह्नं–कृत्वा...... )

—मालविका० II.

8 मालविका—(......वस्तु गायति । )

(E) Kālidāsa indicates that a musician must have a Muraja or some other kind of drum for keeping time and a stringed or wind instrument for accompaniment or drone.[9]

It will be seen from above that the present practice of our musicians to learn first the seven notes and then their several combinations in ascent and descent is reflected in Kālidāsa. Even now they sing first the notes of a mode (नोम् थोम्) and then sing the song set to that mode. They require, while singing, a तबला or पखवाज and a तंबोरा, सारंगी or flute played by their side.

## (B) INSTRUMENTAL MUSIC.

4. Kālidāsa appears to be well conversant with many drum-instruments. He gives the names of मुरज, मृदङ्ग, अङ्क्य, आलिङ्ग्य, ऊर्ध्वक, मर्दल etc. in his works; but he makes special mention of the Puskara instrument in the Mālavikāgnimitra.[10]

---

9 शब्दायन्ते मधुरमनिलैः कीचकाः पूर्यमाणाः ।
संसक्ताभिस्त्रिपुरविजयो गीयते किंनरीभिः ॥
निर्ह्रादस्ते मुरज इव चेत्कन्दरेषु ध्वनिः स्यात् ।
संगीतार्थो ननु पशुपतेस्तत्र भावी समग्रः ॥

—मेघ० I. 59.

10 ध्वनत्सु तूर्येषु सुमन्द्रमङ्क्यालिङ्ग्योर्ध्वकेष्वप्सरसो रसेन ।

—कुमार० XI. 37.

शिखरासक्तमेघानां व्यजन्ते यत्र वेश्मनाम् ।
अनुगर्जितसंदिग्धाः करणैर्मुरजस्वनाः ॥—कुमार० VI. 40.

5. Kālidāsa seems to have practised Tāla (keeping time· music). He describes how Agnivarṇa, by his skilful beats the Puskara, caused the dancing girls to commit mistakes their regular gesticulations. [11]

6. Kālidāsa seems to have been a Viṇā-player. In Raghu I, while describing the position of the dead body of Indu-i taken on the lap by her husband, the Viṇā comes first ore his eyes. [12] Kālidāsa, an unrivalled master of similes, ld have certainly put another substitute there for com-ison. But the similarity of the Viṇā at once strikes him y because it was so familiar to him. It must have been

---

बलाहकाश्चाशनिशब्दमर्दलाः ।—ऋतुसंहार II. 4.
गीतानुगं वारिमृदङ्गवाद्यम् ।—रघु० XVI. 64.
( नेपथ्ये मृदङ्गध्वनिः । सर्वे कर्णं ददति । )
परिव्राजिका—हन्त प्रवृत्तं संगीतम् । तथा ह्येषा
जीमूतस्तनितविशङ्किभिर्मयूरै-
रुद्ग्रीवैरनुरसितस्य पुष्करस्य ।
निर्ह्रादिन्युपहितमध्यमस्वरोत्था
मायूरी मदयति मार्जना मनांसि ॥ —माल० I. 21.
त्वद्गम्भीरध्वनिषु शनकैः पुष्करेष्वाहतेषु ।—मेघ० II. 6.

11 स स्वयं प्रहतपुष्करः कृती लोलमाल्यवलयो हरन्मनः ।
नर्तकीरभिनयातिलङ्घिनीः पार्श्ववर्तिषु गुरुष्वलज्जयत् ॥
—रघु० XIX. 14.
तालैः शिञ्जावलयसुभगैः कान्तया नर्तितो मे ।—मेघ० II. 19.

12 प्रतियोजयितव्यवल्लकीसमवस्थामथ सत्त्वविप्लवात् ।
स निनाय नितान्तवत्सलः परिगृह्योचितमङ्कमङ्गनाम् ॥
—रघु० VIII. 41.

his own experience of often taking it in his lap for tuning. He shows the special care taken by the Yaksa's wife and the Siddhas in wiping off the wet string of their lutes.[13] This is really a very minute yet most important point with regard to the stringed instruments. Only a practical instrumentalist or a musician is expected to show so much care of his instrument.

## (C) DANCING.

7. As Nāṭya is closely connected with music, I include it in this category in the sense of gesticulation. His knowledge of the principles of nṛtya and nāṭya none can dispute. In the Mālavikāgnimitra it is clearly seen how masterly his study of that art was. He gives us, by using many technical terms, the most graphic description of the positions of Mālavikā in the course of, and after, her dance. In Vikramorvashiya IV, he uses many technical terms relating to the Prākṛta songs, their rhythm, as also to the dancing and stage directions connected with them; e. g. प्रावेशिकी, आक्षिप्तिका, द्विपदी, जम्भलिका, खण्डधारा, चर्चरी, खण्डक, खुरक, पाट, वामक, कुटिलिका, मल्लघटी, अर्धद्विचतुरस्रक, चतुरस्रक, कुलिमा, मन्दघटी, स्थानक, गलितक, etc. Also in the Raghuvamsha, Kumārasambhava and Meghadūta he gives us very

---

13 उत्सङ्गे वा मलिनवसने सौम्य निक्षिप्य वीणाम्
मद्गोत्राङ्कं विरचिदपदं गेयमुद्गातुकामा ।
तन्त्रीमार्द्रां नयनसलिलैः सारयित्वा कथंचित्
भूयोभूयः स्वयमपि कृतां मूर्च्छनां विस्मरन्ती ॥—मेघ० II. 26.
सिद्धद्वन्द्वैर्जलकणभयाद्वीणिभिर्मुक्तमार्गः ।—मेघ० I. 48.

ine descriptions of dancing [14] He makes mention of Bharata

14 (1) देवानामिदमामनन्ति मुनयः कान्तं क्रतुं चाक्षुषम् ।
रुद्रेणेदमुमाकृतव्यतिकरे स्वाङ्गे विभक्तं द्विधा ॥
त्रैगुण्योद्भवमत्र लोकचरितं नानारसं दृश्यते ।
नाट्यं भिन्नरुचेर्जनस्य बहुधाप्येकं समाराधनम् ॥

—माल० I. 4.

(2) दीर्घाक्षं शरदिन्दुकान्ति वदनं बाहू नतावंसयोः
संक्षिप्तं निबिडोन्नतस्तनमुरः पार्श्वे प्रमृष्टे इव ।
मध्यः पाणिमितोऽमितं च जघनं पादावरालाङ्गुली
छन्दो नर्तयितुर्यथैव मनसि श्लिष्टं तथास्या वपुः

—माल० II. 3.

(3) अङ्गैरन्तर्निहितवचनैः सूचितः सम्यगर्थः
पादन्यासो लयमनुगतस्तन्मयत्वं रसेषु ।
शाखायोनिर्मृदुरभिनयस्तद्विकल्पानुवृत्तौ
भावो भावं नुदति विषयाद्रागबन्धः स एव ॥

—माल० II.

(4) वामं सन्धिस्तिमितवलयं न्यस्य हस्तं नितम्बे
कृत्वा श्यामाविटपसदृशं स्रस्तमुक्तं द्वितीयं ।
पादाङ्गुष्ठालुलितकुसुमे कुट्टिमे पातिताक्षं
नृत्तादस्याः स्थितमतितरां कांतमृज्वायतार्धम् ॥

—माल० II. 6

(5) बकुला०—आज्ञप्तास्मि देव्या धारिण्या। अचिरप्रवृत्तो
छलिकं ( चलितं ) नाम नाट्यमन्तरेण कीदृशी मालविं
नाट्याचार्यमार्यगणदासं प्रष्टुम् ।—माल० I.

(6) गणदासः—इदानीमेव पञ्चाङ्गाभिनयमुपदिश्य........।

—माल० I

(7) परिव्राजिका—देव शर्मिष्ठायाः कृतिं चतुष्पदोत्थं छालिक्यं दुष्प्रयोज्यमुदाहरन्ति। —माल० I.

(8) गणदासः—देव शर्मिष्ठायाः कृतिर्लयमध्या चतुष्पदास्ति। तस्याश्चतुर्थवस्तुनः प्रयोगमेकमनाः श्रोतुमर्हति देवः।—माल० II.

(9) अभिनयान्परिचेतुमिवोद्यता
मलयमारुतकम्पितपल्लवा।
अमदयत्सहकारलता मनः
सकलिका कलिकामजितामपि ॥—रघु० IX. 29.

(10) श्रुतिसुखभ्रमरस्वनगीतयः कुसुमकोमलदन्तरुचो बभुः।
उपवनान्तलताः पवनाहतैः किसलयैः सलयैरिव पाणिभिः॥

—रघु० IX. 35.

(11) अङ्गसत्ववचनाश्रयं मिथः स्त्रीषु नित्यमुपधाय दर्शयन्।
स प्रयोगनिपुणैः प्रयोक्तृभिः संजघर्ष सह मित्रसंनिधौ॥

—रघु० XIX. 36

(12) तौ सन्धिषु व्यञ्जितवृत्तिभेदं रसान्तरेषु प्रतिबद्धरागम्।
अपश्यतामप्सरसां मुहूर्तं प्रयोगमाद्यं ललिताङ्गहारम्॥

—कुमार० VII. 91.

(13) सुसंधिबन्धं ननृतुः सुवृत्तगीतानुगं भावरसानुविद्धम्।

—कुमार० XI. 36.

author of Nāṭyasāstra.[15]

8. Kālidāsa seems to have studied works on music. The cries of peacocks have been, for instance, mentioned as of the same pitch as the Saḍja, the first note of our musica scale.[16]

I have tried to explain, as far as possible, the technical terms occurring in Kālidāsa's works, in appendix No. 1.

---

(14) पादन्यासैः क्वणितरशनास्तत्र लीलावधूतैः
रत्नच्छायाखचितवलिभिश्चामरैः क्लान्तहस्ताः ।
वेश्याः.........................॥—मेघ० I. 35.

15 देवदूतः—मुनिना भरतेन यः प्रयोगे
भवतीष्वष्टरसाश्रयो निबद्धः ।
ललिताभिनयं तमद्य भर्ता
मरुतां द्रष्टु-मनाः सलोकपालः ॥
—विक्रमोर्य० II. 17.

16 मनोभिरामाः शृण्वन्तौ रथनेमिस्वनोन्मुखैः ।
षड्जसंवादिनीः केका द्विधा भिन्नाः शिखण्डिभिः ॥
—रघु० 1.39.

# APPENDIX I.

अङ्कयः—A kind of drum.

अङ्गम्—A branch, a subdivision, an aspect, limb, body.

अङ्गहारः—Gesticulation.

अनुविद्ध—Accompanied by, full of.

अभिनयः—Gesticulation.

अर्थः—Meaning, outfit or apparatus.

आक्षिप्तिका—A particular song or air which is sung by a approaching the stage.

आतोद्यम्—Any kind of musical instrument.

आलापः—A form of the prelude of a Rāga.

उद्गानम्:—Singing in a high pitch ( in गन्धारग्राम ).

उपगानम्—The prelude of a Rāga.

उपदेशः—Instruction.

उपवहनम्—See उपगानम् ।

उपवीणय—To play upan a Viṇā in unison with singing, Viṇa to.

उपोहनम्—See उपगानम्.

ऊर्ध्वकः—A kind of drum.

ककुभः—Name of a Rāga, a kind of metre.

करणः—A term for various beats on a drum.

कला—Art, a measure of timing.

कलिका—The bottom of a peg of the Indian lute.

किन्नरः—Celestial bard.

कीचकः—The Bamboo tree.

कुटिलिका— } A peculiar movement or gesture.
कुलिका— }

कृतिः—Composition, action.

कैशिक—Name of a ग्रामराग.

खण्डकः—A kind of dance of air, name or a metre.

खण्डधारा— " " " "

खुरकः—A kind of dance.

गलितकः—A kind of dance or gesticulation.

चतुरस्रकः—Name of various postures in dancing.

चर्चरी-रिका—A kind of gesture of song, musical symphony. Striking the hand to beat time.

चलितम्—A song consisting of four parts and recited with certain gestures or gesticulation.

चतुष्पद्—Having four parts.

छलिक-तम्—See चलितम्.

जम्भलिका—A kind of song.

तन्त्री—Vieeṇā, a kind of guitar, string.

तानः—The drone or toinc. Accompaniment.

तालः—Rhythm, timing in music.

तेना—A meaningless combination of characters used in singing the prelude of a Rāga.

तूर्यः—See आतोद्यम् ।

दुन्दुभिः—A kind of drum.

द्विपदिका—A peculiar movement. A kind of metre.

नर्तकी—A dancing girl.

नर्तयितृ—A dancing teacher.

नाट्यम्—Gesticulation with language.

नृत्तम्—Simple dancing.

नृत्यम्—Gesticulation without language.

नेपथ्यम्—Costume of an actor, the part of a stage behind the scenes.

पटहः—A kind of drum.

परिवादिनी—A lute.

पाटः—A combination of latters in drum-beating.

पादन्यासः—Stepping in dancing.

पुष्करः—A kind of drum.

प्रयोगः—Representation.

प्रावेशिकी—Relating to the entrance on the stage.

प्राश्निकः—An umpire, an examiner.

प्रेक्षागृहम्—A theatre.

भरतः—Name of the author of Nāṭyashastra.

भावः—Emotion, condition of the mind or body.

भिन्नकः—Name of a Rāga.

भेरी—A kettle-drum.

मन्दघटी—A kind of metre.

मर्दलः—A kind of drum.

मल्लघटी—A kind of dancing or pantomimic gestute.

मायूरी—One of the special beats on the Pushkara drum.

मार्गः—Style of singing, dancing or acting.

मार्जना—A form of beating on a drum.

मुरजः—A kind of drum.

मूर्च्छना—The regular ascent and descent of the notes complete musical scale.

मृदङ्गः—A kind of drum.

मृदु—Beautiful.

रसः—Sentiment, flavour.

रागः—A musical mode.

लयः—Regulated time in music.

वंशः—The Bamboo, a flute ;—कृत्यम् Playing on the flute.

वर्णः—Elements of singing.

वलन्तिका—A peculiar Rāga.

वल्लकी—Viṇā, a lyre.

वस्तु—A composition, a piece, plot.

वितन्त्री—A lyre baving discordant strings.

वृत्तिः—Style of dramatic representation Action.

वेणुः—Flute.

शङ्खः—A conch.

शाखायः—( Gesticulation by ) poses of the hand.

षड्जसंवादिनी—Resembling the shadja, the first note of a musical scale or drone

संगीतकम्—Music, comprising dancing etc.

संगीतरचना—Preliminaries of respresentation.

संगीतशाला—Concert-hall.

सत्त्वम्—Life, purity, style; the pegs of a lyre by which its strings are strained

संधिः—Critical junctures or situations in a drama.

स्थानम्—See तानः

स्थानकः—A particular point or situation in dramatic action.

स्वरः—A tone, a note.

---

# APPENDIX II

( 1 ) दुल्लहो पिहो तस्सिं. ... ... ... मालविका II. 4.

( 2 ) ईसीसि चुम्बिआइं. ... ... ... शाकुंतले I. 1.

( 3 ) अहिणवमहुलोलुवो. ... ... ... शाकुंतले V. 1.

( 4 ) अविसअगमणम्. ... ... ... शाकुंतले VII. 1. ( Kashmir Mss. )

( 5–35 ) चर्चरी. ... ... ... ... विक्रमो. IV.

Vide pages 135–149 of this Book.

END.

---

Printed by Dinkar Sitaram Sakhalkar at the Lokasevak Press,
Khatav Building, Girgaon, Bombay No. 4
Published by Keshav Appa Padhye, B. A. LL. B at New
Bhatwadi, Girgaon, Bombay No. 4

## Appendix C.

It is a well-known fact to readers of Sanskrit Literature that the writings of Kalidas are emblllished with Similes unparalled for their exquisite beauties and appropriateness. We propose/ to give a few selections of these.

### अभिज्ञानशाकुन्तले

गच्छति पुरः शरीरं धावति पश्चादसंस्तुतं चेतः ।
चीनांशुकमिव केतोः प्रतिवातं नीयमानस्य ॥ १–३० ॥

शमप्रधानेषु तपोधनेषु गूढं हि दाहात्मकमस्ति तेजः ।
स्पर्शानुकूला इव सूर्यकान्तास्तदन्यतेजोऽभिभवाद्वमन्ति ॥२–७॥

सुरयुवतिसंभवं किल मुनेरपत्यं तदुज्झिताधिगतम् ।
अर्कस्योपरि शिथिलं च्युतमिव नवमालिकाकुसुमम् ॥ २–८ ॥

कृत्ययोर्भिन्नदेशत्वाद्द्वैधीभवति मे मनः ।
पुरः प्रतिहतं शैले स्रोतः स्रोतोवहो यथा ॥ २–१७ ॥

स्मर एव तापहेतुर्निर्वापयिता स एव मे जातः ।
दिवस इवार्धश्यामस्तपात्यये जीवलोकस्य ॥ ३–१९ ॥

धूमाकुलितदृष्टेरपि यजमानस्य पावक एवाहुतिः पतिता ॥ ४ ॥

**शकुन्तला**—( पितरमाश्लिष्य । ) कथमिदानीं तातस्याङ्कात्परिभ्रष्टा मलयतरून्मूलिता चन्दनलतेव देशान्तरे जीवितं धारयिष्ये॥४॥

यूथानि संचार्य रविप्रतप्तः शीतं दिवास्थानमिव द्विपेन्द्रः॥५–५

नातिश्रमापनयनाय न च श्रमाय ।
राज्यं स्वहस्तधृतदण्डमिवातपत्रम् ॥ ५—६
तथापीदं शश्वत्परिचितविविक्तेन मनसा ।
जनाकीर्णं मन्ये हुतवहपरीतं गृहमिव ॥ ५—१०
कास्विदवगुण्ठनवती नातिपरिस्फुटशरीरलावण्या ।
मध्ये तपोधनानां किसलयमिव पाण्डुपत्राणाम् । ५—१३
तमस्तपति घर्मांशौ कथमाविर्भविष्यति । ५—१४
इदमुपनतमेवं रूपमक्लिष्टकान्ति
प्रथमपरिगृहीतं स्यान्न वेति व्यवस्यन् ।
भ्रमर इव विभाते कुन्दमन्तस्तुषारं
न च खलु परिभोक्तुं नैव शक्नोमि हातुम् ॥ ५—१९ ॥
व्यपदेशमाविलयितुं किमीहसे जनमिमं च पातयितुम् ।
कूलंकषेव सिन्धुः प्रसन्नमम्भस्तटतरुं च ॥ ५—२१ ॥
कुमुदान्येव शशाङ्कः सविता बोधयति पङ्कजान्येव ।
वशिनां हि परपरिग्रहसंश्लेषपराङ्मुखी वृत्तिः ॥ ५—२८ ॥
संस्कारोल्लिखितो महामणिरिव क्षीणोऽपि नालक्ष्यते । ६—६
साक्षात्प्रियामुपगतामपहाय पूर्वं
चित्रार्पितां पुनरिमां बहु मन्यमानः
स्रोतोवहां पथि निकामजलामतीत्य
जातः सखे प्रणयवान्मृगतृष्णिकायाम् ॥ ६—१६
संरोपितेऽप्यात्मनि धर्मपत्नी त्यक्ता मया नाम कुलप्रतिष्ठा ।
कल्पिष्यमाणा महते फलाय वसुंधरा काल इवोप्तबीजा॥६-२४

महतस्तेजसो बीजं बालोऽयं प्रतिभाति मे ।
स्फुलिङ्गावस्थया वन्हिरेधापेक्ष इव स्थितः ॥ ७–१९
अलक्ष्यपत्रान्तरमिद्धरागया नवोषसा भिन्नमिवैकपङ्कजम्।७-१६
स्मृतिभिन्नमोहतमसो दिष्ट्या प्रमुखे स्थितासि मे सुमुखि ।
उपरागान्ते शशिनः समुपगता रोहिणी योगम् ॥ ७–२२

## मेघदूते ।

रेवां द्रक्ष्यस्युपलविषमे विन्ध्यपादे विशीर्णां
भक्तिच्छेदैरिव विरचितां भूतिमङ्गे गजस्य ॥ १९ ॥
संसर्पन्त्या सपदि भवतः स्रोतसि च्छाययासौ
स्यादस्थानोपगतयमुनासङ्गमेवाभिरामा ॥ ५१ ॥
या वः काले वहति सलिलोद्गारमुच्चैर्विमाना
मुक्ताजालग्रथितमलकं कामिनीवाभ्रवृन्दम् ॥ ६२ ॥

## कुमारसम्भवे ।

पूर्वापरौ तोयनिधी वगाह्य स्थितः पृथिव्या इव मानदण्डः १–१
तया दुहित्रा सुतरां सवित्री स्फुरत्प्रभामण्डलया चकासे ।
विदूरभूमिर्नवमेघशब्दादुद्भिन्नया रत्नशलाकयेव ॥ १–२४ ॥
महीभृतः पुत्रवतोऽपि दृष्टिस्तस्मिन्नपत्ये न जगाम तृप्तिम् ।
अनन्तपुष्पस्य मधोर्हि चूते द्विरेफमाला सविशेषसङ्गा ॥१–२७॥
कुबेरस्य मनःशल्यं शंसतीव पराभवम् ।
अपविद्धगदो बाहुर्भग्नशाख इव द्रुमः ॥ २–२२ ॥

पर्याकुलात्वान्मरुतां वेगभङ्गोऽनुमीयते ।
अम्भसामोघसंरोधः प्रतीपगमनादिव ॥ २–२५ ॥

लब्धप्रतिष्ठाः प्रथमं यूयं किं बलवत्तरैः ।
अपवादैरिवोत्सर्गाः कृतव्यावृत्तयः परैः ॥ २–२७ ॥

भवल्लब्धवरोदीर्णस्तारकाख्यो महासुरः ।
उपप्लवाय लोकानां धूमकेतुरिवोत्थितः ॥ २–३२ ॥

तदिच्छान्ते विभो स्रष्टुं सेनान्यं तस्य शान्तये ॥
कर्मबन्धच्छिदं धर्मं भवस्येव मुमुक्षवः ॥ २–५१ ॥

उमारूपेण ते यूयं संयमस्तिमितं मनः ।
शंभोर्यतध्वमाक्रष्टुमयस्कान्तेन लोहवत् ॥ २–५९ ॥

तद्गच्छ सिद्ध्यै कुरु देवकार्यमर्थोऽयमर्थान्तरभाव्य एव ।
अपेक्षते प्रत्ययमुत्तमं त्वां बीजाङ्कुरः प्रागुदयादिवाम्भः ।३–१८।

आवर्जिता किंचिदिव स्तनाभ्यां वासो वसाना तरुणार्करागम्
पर्याप्तपुष्पस्तबकावनम्रा संचारिणी पल्लविनी लतेव ॥ ३–५४ ॥

क्व नु मां त्वदधीनजीवितां विनिकीर्य क्षणभिन्नसौहृदः ।
नलिनीं क्षतसेतुबन्धनो जलसंघात इवासि विद्रुतः ॥ ४–६ ॥

तमवेक्ष्य रुरोद सा भृशं स्तनसंबाधमुरो जघान च ।
स्वजनस्य हि दुखमग्रतो विवृतद्वारामिवोपजायते ॥ ४–२६ ॥

विधिना कृतमर्धवैशसं ननु मां कामवधे विमुञ्चता ।
अनपायिनि संश्रयद्रुमे गजभग्ने पतनाय वल्लरी ॥ ४–३१ ॥

इति देहविमुक्तये स्थितां रतिमाकाशभवा सरस्वती ।
शफरीं ह्रदशोषविक्लवां प्रथमा वृष्टिरिवान्वकम्पयत् ॥ ४–३९ ॥

तदिदं परिरक्ष शोभने भवितव्यप्रियसंगमं वपुः ।
रविपीतजला तपात्यये पुनरोघेन हि युज्यते नदी ॥ ४–४४

अथ मदनवधूरुपप्लवान्तं व्यसनकृशा परिपालयांबभूव ।
शशिन इव दिवातनस्य लेखा किरणपरिक्षयधूसरा प्रदोषम् ४-४६

मनीषिताः सन्ति गृहेषु देवतास्तपः क्व वत्से क्व च तावकं वपुः ।
पदं सहेत भ्रमरस्य पेलवं शिरीषपुष्पं न पुनः पतत्रिणः ॥५-४॥

किमित्यपास्याभरणानि यौवने धृतं त्वया वार्धकशोभि वल्कलम् ।
वद प्रदोषे स्फुटचन्द्रतारका विभावरी यद्यरुणाय कल्पते ५–४४

मुनिव्रतैस्त्वामतिमात्रकार्शितां दिवाकराप्लुष्टविभूषणास्पदाम् ।
शशाङ्कलेखामिव पश्यतो दिवा सचेतसः कस्य मनो न दूयते।४८।

अत आहर्तुमिच्छामि पार्वतीमात्मजन्मने ।
उत्पत्तये हविर्भोक्तुर्यजमान इवारणिम् ॥ ६–२८ ॥

सा मङ्गलस्नानविशुद्धगात्री गृहीतपत्युद्गमनीयवस्त्रा ।
निवृत्तपर्जन्यजलाभिषेका प्रफुल्लकाशा वसुधेव रेजे ॥ ७–११ ॥

मूर्ते च गङ्गायमुने तदानीं समाचरे देवमसेविषाताम् ।
समुद्रगारूपविपर्ययेऽपि सहंसपाते इव लक्ष्यमाणे ॥ ७–४२

विलोलनेत्रभ्रमरैर्गवाक्षाः सहस्रपत्राभरणा इवासन् ॥ ७–६२ ॥

गणाश्च गिर्यालयमभ्यगच्छन्प्रशस्तमारम्भमिवोत्तमार्थाः ॥ ७-७१

## रघुवंश.

मन्दः कवियशःप्रार्थी गमिष्याम्युपहास्यताम् ।
प्रांशुलभ्ये फले लोभादुद्बाहुरिव वामनः ॥ १–३ ॥
अथवा कृतवाग्द्वारे वंशेऽस्मिन्पूर्वसूरिभिः ।
मणौ वज्रसमुत्कीर्णे सूत्रस्येवास्ति मे गतिः ॥ १–४ ॥
तस्य संवृतमन्त्रस्य गूढाकारेङ्गितस्य च ।
फलानुमेयाः प्रारम्भाः संस्काराः प्राक्तना इव ॥ १–२० ॥
गुणा गुणानुबन्धित्वात्तस्य सप्रसवा इव ॥ १–२२ ॥
काप्यभिख्या तयोरासीद्व्रजतोः शुद्धवेषयोः ।
हिमनिर्मुक्तयोर्योगे चित्राचन्द्रमसोरिव ॥ १–४६ ॥
विधेः सायंतनस्यान्ते स ददर्श तपोनिधिम् ।
अन्वासितमरुन्धत्या स्वाहयेव हविर्भुजम् ॥ १–५६ ॥
असह्यपीडं भगवन्नृणमन्त्यमवेहि मे ।
अरुंतुदमिवालानमनिर्वाणस्य दन्तिनः ॥ १–७१ ॥
मार्गं मनुष्येश्वरधर्मपत्नी श्रुतेरिवार्थं स्मृतिरन्वगच्छत् ॥ २–२ ॥
पयोधरीभूतचतुःसमुद्रां जुगोप गोरूपधरामिवोर्वीम् ॥ २–३ ॥
आसीदनाविष्कृतदानराजिरन्तर्मदावस्थ इव द्विपेन्द्रः ॥ २–७ ॥
अवाकिरन्बाललताः प्रसूनैराचारलाजैरिव पौरकन्याः ॥२–१०॥
स पाटलायां गवि तस्थिवांसं धनुर्धरः केसरिणं ददर्श ।
अधित्यकायामिव धातुमय्यां लोध्रद्रुमं सानुमतः प्रफुल्लम् २–२९

राजा स्वतेजोभिरदह्यतान्तर्भोगीव मन्त्रौषधिरुद्धवीर्यः ॥२–३२॥

उपस्थिता शोणितपारणा मे सुरद्विषश्चान्द्रमसी सुधेव ॥२–३९॥

तमाहितौत्सुक्यमदर्शनेन प्रजाः प्रजार्थव्रतकर्शिताङ्गम् ।

नेत्रैः पपुस्तृप्तिमनाप्नुवद्भिर्नवोदयं नाथमिवौषधीनाम् ॥२–७३॥

शरीरसादादसमग्रभूषणा मुखेन सालक्ष्यत लोध्रपाण्डुना ।

तनुप्रकाशेन विचेयतारका प्रभातकल्पा शशिनेव शर्वरी ॥३–२॥

पुपोष वृद्धिं हरिदश्वदीधितेरनुप्रवेशादिव बालचन्द्रमाः॥३–२२॥

स वृत्तचूलश्चलकाकपक्षकैरमात्यपुत्रैः सवयोभिरन्वितः ।

लिपेर्यथावद्ग्रहणेन वाङ्मयं नदीमुखेनेव समुद्रमाविशत् ॥३–२८॥

ततार विद्याः पवनातिपातिभिर्दिशो हरिद्भिर्हरितामिवेश्वरः ३–३०

विभावसुः सारथिनेव वायुना घनव्यपायेन गभस्तिमानिव ।

बभूव तेनातितरां सुदुःसहः कटप्रभेदेन करीव पार्थिवः ॥३–३७॥

शशाक निर्वापयितुं न वासवः स्वतश्च्युतं वह्निमिवाद्भिरम्बुदः ३-५८

मन्दोत्कण्ठाः कृतास्तेन गुणाधिकतया गुरौ ।

फलेन सहकारस्य पुष्पोद्गम इव प्रजाः ॥ ४–९ ॥

रामास्त्रोत्सारितोऽप्यासीत्सह्यलग्न इवार्णवः ॥ ४–५३ ॥

यवनीमुखपद्मानां सेहे मधुमदं न सः ।

बालातपमिवाब्जानामकालजलदोदयः ॥ ४–६१ ॥

यतस्त्वया ज्ञानमशेषमाप्तं लोकेन चैतन्यमिवोष्णरश्मेः ॥५–४॥

आरण्यकोपात्तफलप्रसूतिः स्तम्बेन नीवार इवावशिष्टः ॥५–१५॥

न कारणात्स्वाद्बिभिदे कुमारः प्रवर्तितो दीप इव प्रदीपात् ५-३७

शिलाविभङ्गैर्मृगराजशावस्तुङ्गं नगोत्सङ्गमिवारुरोह । ६—३

सहस्रधात्माव्यरुचाद्विभक्तः पयोमुचां पङ्क्तिषु विद्युतेव । ६–५

रराज धाम्ना रघुसूनुरेव कल्पद्रुमाणामिव पारिजातः ६–६

मदोत्कटे रेचितपुष्पवृक्षा गन्धद्विपे वन्य इव द्विरेफाः ६–७

कामं नृपाः सन्तु सहस्रशोऽन्येराजन्वतीमाहुरनेन भूमिम् ।

नक्षत्रताराग्रहसंकुलापि ज्योतिष्मती चन्द्रमसैव रात्रिः ॥ ६–२२

तस्याः प्रकामं प्रियदर्शनोऽपि न स क्षितिशो रुचये बभूव ।

शरत्प्रमृष्टाम्बुधरोपरोधः शशीव पर्यास्तकलो नलिन्याः ॥ ६–४४

नृपं तमावर्तमनोज्ञनाभिः सा व्यत्यगादन्यवधूर्भवित्री ।

महीधरं मार्गवशादुपेतं स्रोतोवहा सागरगामिनीव ॥ ६–५२

आभाति बालातपरक्तसानुः सनिर्झरोद्गार इवाद्रिराजः ॥६–६०

अन्योन्यशोभापरिवृद्धये वां योगस्तडित्तोयदयोरिवास्तु ॥६–६५

दुकूलवासाः स वधूसमीपं निन्ये विनीतैरवरोधरक्षैः ।

वेलासकाशं स्फुटफेनराजिर्नवैरुदन्वानिव चन्द्रपादैः ७–१९

हस्तेन हस्तं परिगृह्य वध्वाः स राजसूनुः सुतरां चकासे ।

अनन्तराशोकलताप्रवालं प्राप्येव चूतः प्रतिपल्लवेन । ७–२१

मत्स्यध्वजा वायुवशाद्विदीर्णैर्मुखैः प्रवृद्धध्वजिनीरजांसि ।

बभुः पिबन्तः परमार्थमत्स्याः पर्याविलानीव नवोदकानि । ७-४०

आवृण्वतो लोचनमार्गमाजौ रजोऽन्धकारस्य विजृम्भितस्य ।

शस्त्रक्षताश्वद्विपवीरजन्मा बालारुणोऽभूद्रुधिरप्रवाहः ॥ ७–४२

शिलीमुखोत्कृत्तशिरः फलाढ्या च्युतैःशिरस्त्रैश्चषकोत्तरेव ।

रणक्षितिः शोणितमद्यकुल्या रराज मृत्योरिव पानभूमिः॥७–४९

व्यूहावुभौ तावितरेतरस्माद्भङ्गं जयं चापतुरन्यवस्थम् ।
पश्चात्पुरोमारुतयोः प्रवृद्धौ पर्यायवृत्त्येव महार्णवोर्मी ॥ ७–५४

निवारयामास महावराहः कल्पक्षयोद्वृत्तमिवार्णवाम्भः ॥ ७-५६

हृष्टापि सा ह्रीविजिता न साक्षाद्वाग्भिः सखीनां प्रियमभ्यनन्दत् ।
स्थलीनवाम्भःपृषताभिवृष्टा मयूरकेकाभिरिवाभ्रवृन्दम् ॥ ७–६९

सदयं बुभुजे महाभुजः सहसोद्वेगमियं व्रजेदिति ।
अचिरोपनतां स मेदिनीं नवपाणिग्रहणां वधूमिव ॥ ८–७

अहमवे मतो महीपतेरिति सर्वः प्रकृतिष्वचिन्तयत् ।
उदधेरिव निम्नगाशतेष्वभवन्नास्य विमानना क्वचित् ॥ ८–८

न तु सर्प इव त्वचं पुनः प्रतिपेदे व्यपवर्जितां श्रियम् । ८–१३॥

यतिपार्थिवलिङ्गधारिणौ ददृशाते रघुराघवौ जनैः ।
अपवर्गमहोदयार्थयोर्भुवमंशाविव धर्मयोर्गतौ ॥ ८–१६

अनृणत्वमुपेयिवान्बभौ परिधेर्मुक्त इवोष्णदीधितिः । ८–३०

क्षणमात्रसखीं सुजातयोः स्तनयोस्तामवलोक्य विह्वला ।
निमिमील नरोत्तमप्रिया हृतचन्द्रा तमसेव कौमुदी ॥ ८–३७ ॥

पतिरङ्कनिषण्णया तया करणापायविभिन्नवर्णया ।
समलक्ष्यत बिभ्रदाविलां मृगलेखामुषसीव चन्द्रमाः ॥ ८–४२ ॥

प्रबुद्धपुण्डरीकाक्षं बालातपनिभांशुकम् ।
दिवसं शारदमिव प्रारम्भसुखदर्शनम् ॥ १०–९ ॥

आविर्भूतमपां मध्ये पारिजातमिवापरम् ॥ १०–११ ॥

बभौ सदशनज्योत्स्ना सा विभोर्वदनोद्गता ।
निर्यातशेषा चरणाद्गङ्गेवोर्ध्वप्रवर्तिनी ॥ १०—३७ ॥

स्रष्टुर्वरातिसर्गात्तु मया तस्य दुरात्मनः ।
अत्यारूढं रिपोः सोढं चन्दनेनेव भोगिनः ॥ १०—४२ ॥

सैकताम्भोजबलिना जाह्नवीव शरत्कृशा ॥ १०—६९ ॥

ज्योतिरिन्धननिपाति भास्करात्सूर्यकान्त इव ताडकान्तकः ११-२३

तेन शैलगुरुमप्यपातयत्पाण्डुपत्रमिव ताडकासुतम् ॥ ११—२८॥

सा किलाश्वासिता चण्डी भर्त्रा तत्संश्रुतौ वरौ ।
उद्वामेन्द्रसिक्ता भूर्बिलमग्नाविवोरगौ ॥ १२—५ ॥

स जहार तयोर्मध्ये मैथिलीं लोकशोषणः ।
नभोनभस्ययोर्वृष्टिमवग्रह इवान्तरे ॥ १२—२९ ॥

तस्यापतन्मूर्ध्नि जलानि जिष्णोर्विन्ध्यस्य मेघप्रभवा इवापः १४—८

मत्तः सदाचारशुचेः कलङ्कः पयोदवातादिव दर्पणस्य । १४—३७।

पौरेषु सोऽहं बहुलीभवन्तमपां तरङ्गेष्विव तैलबिन्दुम् ।
सोढुं न तत्पूर्वमवर्णमीशे आलानिकं स्थाणुमिव द्विपेन्द्रः। १४-३८।

गङ्गा निषादाहृतनौविशेषस्ततार संधामिव सत्यसंधः ॥ १४—९२॥

जनास्तदालोकमथात्प्रतिसंहृतचक्षुषः ।
तस्थुस्तेऽवाङ्मुखाः सर्वे फलिता इव शालयः ॥ १५—७८ ॥

अगस्त्यचिह्नादयनात्समीपं दिगुत्तरा भास्वति संनिवृत्ते ।
आनन्दशीतामिव बाष्पवृष्टिं हिमस्रुतिं हैमवतीं ससर्ज ॥ १६-४४॥

वनेषु सायंतनमल्लिकानां विजृम्भणोद्गन्धिषु कुड्मलेषु ।
प्रत्येकनिक्षिप्तपदः सशब्दं संख्यामिवैषां भ्रमरश्चकार ॥ १६-४७॥
पश्यावरोधैः शतशो मदीयैर्विगाह्यमानो गलिताङ्गरागैः ।
संध्योदयः साभ्र इवैष वर्णं पुष्यत्यनेकं सरयूप्रवाहः ॥ १६-५८॥
तेनावरोधप्रमदासखेन विगाहमानेन सरिद्वरां ताम् ।
आकाशगङ्गारतिरप्सरोभिर्वृतो मरुत्वाननुयातलीलः॥ १६-७१॥
तस्य सन्मन्त्रपूताभिः स्नानमद्भिः प्रतीच्छतः ।
ववृधे वैद्युतस्याग्नेर्वृष्टिसेकादिव द्युतिः ॥ १७-१६ ॥
बभौ भूयः कुमारत्वादाधिराज्यमवाप्य सः ।
रेखाभावादुपारूढः सामग्र्यामिव चन्द्रमाः ॥ १७-३० ॥
सर्पस्येव शिरोरत्नं नास्य शक्तित्रयं परः ।
स चकर्ष परस्मात्तदयस्कान्त इवायसम् ॥ १७-६३ ॥



K. A. Padhye B. A. LL. B. has really obliged the lovers
crit Literature and particularly those of Kalidasa's books by
out this small book. The arrangement followed in this
particularly happy. It affords great facility to the study of
ks of Kalidas in their different aspects, thus to the study of
t's mind and art. It would have much added to the utility
ook, if Mr. Padhye had given his own appreciation of the
g passages at the beginning of each chapter. As it is, how-
e book is very useful and will surely help to promote the
study of Kalidas and his works.

**H. D. VELANKAR**, M. A.,
Professor of Sanskrit, Wilson College.

---

r Mr. Padhye,

overs of Sanskrit Literature and particularly of Kalidasa will
nkful to you for bringing together in a handy form selec-
om the works of Kalidasa and some of his *bon mots*.
selection has been made with care and judiciousness. The
features of the muse of Kalidasa are well brought out in
ume. His unrivalled command over Sanskrit, the ease
ce of his style, his lofty conception of the Supreme Being,
er of compressing suggestive thoughts in a few well chosen
his apt similes, his spirited dialogues-these and several
xcellences are well illustrated in these selections. I hope
s disinterested effort of yours will increase the circle of the
rs and students of the prince of Sanskrit poets.

Yours Sincerely,

**P. V. KANE**, M. A., LL. M,
Vakil, High Court.

# Beauties from Kalidas

or

# कालिदाससूक्तिमंजूषा.



BY

**Keshav Appa Padhye,** B. A. LL. B.
Vakil High Court, Bombay.

FIRST EDITION.







*Price Re. 1-8 0.*



**1927.**

This Book is dedicated
TO

**BHAWANRAO**
**Shrimant Shriniwasrao**

alias

**Balasaheb, Pant Pratinidhi B. A.,**
**Chief of Aundh**



as a mark of appreciation of his various intellectual and educational activities in promoting the cause of Sanskrit Literature in general and of his efforts to bring out an authoritative edition of the Mahabharat and to popularise the great Indian Epics by illustrating the main incidents therein by vivid paintings drawn with great personal skill.

**K. A. Padhye.**



कविकुलगुरुः कालिदासः ।

# FOREWORD.



I consider it an honour and a privilege to be asked to write a foreword to this book. My friend Mr. Padhye must be congratulated upon his excellent idea of presenting the reader world with select quotations and extracts from the works of Kalidas, distributed under different heads. " A thing of beauty is a joy for ever ". And his readers will feel grateful to the author for supplying them, in a good handy form, so many beauties culled and selected from the writings of the greatest poet in the Sanskrit language. Few can, I think, demur to the charge brought by Mr. Padhye that, though the Indian people are proud of Kalidas, they do not study him with sufficient devotion and assiduity. No doubt such study requires time and close attention. But both these are sure to be repaid by the joy one feels while reading Kalidas even cursorily, and specially so when one enters into his spirit and sentiment.

It is probable that some other readers of Kalidas may put their [illegible] on some other beauties which have not found a place in this book. Tastes in a matter like this will always diff[illegible] have no doubt that the collection actually made by Mr. Padhye includes passages as to the beauty of which opinion will be absolutely unanimous. It is, I think, impossible to find such elegance of diction, such happiness of expression, and such sublimity of thought in any other Sanskrit poet. Bhavabhuti and Bana have certainly their strong points. The former, in my opinion, sometimes excels Kalidas in his pathos of sentiment, and it would be difficult to imagine how the gushing flow of Bana and his

भर्त्रा तदर्पितकुटुम्बभरेण सार्धं
शान्ते करिष्यसि पदं पुनराश्रमेऽस्मिन् ॥ १९ ॥

**गौतमी**—जाते, परिहीयते गमनवेला। निवर्तय पितरम्। अथवा चिरेणापि पुनः पुनरेषैवं मन्त्रयिष्यते। निवर्ततां भवान्।

**काश्यपः**—वत्से, उपरुध्यते तपोनुष्ठानम्।

**शकुन्तला**—( भूयः पितरमाश्लिष्य ) तपश्चरणपीडितं तातशरीरम्। तन्मातिमात्रं मम कृत उत्कण्ठितुम्।

**काश्यपः**—( सनिःश्वासम् )

शममेष्यति मम शोकः कथं नु वत्से त्वया रचितपूर्वम्।
उटजद्वारविरूढं नीवारबलिं विलोकयतः ॥ २० ॥
गच्छ। शिवास्ते पन्थानः सन्तु।

( निष्क्रान्ता शकुन्तला सहयायिनश्च। )

**सख्यौ**—( शकुन्तलां विलोक्य ) हा धिक्, हा धिक्। अन्तर्हिता शकुन्तला वनराज्या।

**काश्यपः**—( सनिःश्वासम् ) अनसूये, गतवती वां सहधर्मचारिणी। निगृह्य शोकमनुगच्छतं मां प्रस्थितम्।

**उभे**—तात, शकुन्तलाविरहितं शून्यमिव तपोवनं कथं प्रविशावः।

**काश्यपः**—स्नेहप्रवृत्तिरेवंदर्शिनी। ( सविमर्शं परिक्रम्य ) हन्त भोः, शकुन्तलां पतिकुलं विसृज्य लब्धमिदानीं स्वास्थ्यम्। कुतः?

अर्थो हि कन्या परकीय एव
तामद्य संप्रेष्य परिग्रहीतुः।
जातो ममायं विशदः प्रकामं
प्रत्यर्पितन्यास इवान्तरात्मा ॥ २१ ॥

( इति निष्क्रान्ताः सर्वे। )

—शाकुन्तले चतुर्थोऽङ्कः।

---

Repudiation of Shakuntala by Dushyanta as hi
wife. (This total forgetfulness and denial on the
part of the King Dushyanta is due to the
curse given by sage Durvasas owing to
the cold reception he received at
the hands of Shakuntala when
he visited the hermitage of
Kashyapa during his
absence.)

**राजा**—अपि निर्विघ्नतपसो मुनयः ?

**ऋषयः**—

कुतो धर्मक्रियाविघ्नः सतां रक्षितरि त्वयि ।
तमस्तपति घर्मांशौ कथमाविर्भविष्यति ॥ १४ ॥

**राजा**—अर्थवान्खलु मे राजशब्दः । अथ भगवांल्लोकानुग्रहाय कुशली काश्यपः ?

**शार्ङ्गरवः**—स्वाधीनकुशलाः सिद्धिमन्तः । स भवन्तमनामयप्रश्नपूर्वकमिदमाह ।

**राजा**—किमाज्ञापयति भगवान् ।

**शार्ङ्गरवः**—यन्मिथःसमयादिमां मदीयां दुहितरं भवानुपायंस्त तन्मया प्रीतिमता युवयोरनुज्ञातम् । कुतः ?

त्वमर्हतां प्राग्रसरः स्मृतोऽसि नः
शकुन्तला मूर्तिमती च सत्क्रिया ।
समानयंस्तुल्यगुणं वधूवरं
चिरस्य वाच्यं न गतः प्रजापतिः ॥ १५ ॥

तदिदानीमापन्नसत्त्वा प्रतिगृह्यतां सहधर्मचरणायेति ।

**गौतमी**—आर्य, किमपि वक्तुकामास्मि । न मे वचनावसरोऽस्ति । कथमिति ।

नावेक्षितो गुरुजनोऽनया न खलु पृष्टश्च बन्धुजनः ।
परस्परस्मिन्नेव चरिते भणामि किमेकैकम् ॥ १६ ॥

**शकुन्तला**—( आत्मगतम् ) किं नु खल्वार्यपुत्रो भणाति ?

**राजा**—किमिदमुपन्यस्तम् ?

**शकुन्तला**—( आत्मगतम् ) पावकः खलु वचनोपन्यासः ।

**शार्ङ्गरव**—कथमिदं नाम । भवन्त एव सुतरां लोकवृत्तान्तनिष्णाताः ।

सतीमपि ज्ञातिकुलैकसंश्रयां
जनोऽन्यथा भर्तृमतीं विशङ्कते ।
अतः समीपे परिणेतुरिष्यते
प्रियाप्रिया वा प्रमदा स्वबन्धुभिः ॥ १७ ॥

**राजा**—किं चात्रभवती मया परिणीतपूर्वा ?

**शकुन्तला**—( सविषादम् । आत्मगतम् )हृदय, सांप्रतं त आशङ्का !

**शार्ङ्गरवः**—

किं कृतकार्यद्वेषो धर्मं प्रति विमुखता कृतावज्ञा ।

**राजा**—कुतोऽयमसत्कल्पनाप्रश्नः ?

**शार्ङ्गरवः**—

मूर्च्छन्त्यमी विकाराः प्रायेणैश्वर्यमत्तेषु ॥ १८ ॥

**राजा**—विशेषेणाधिक्षिप्तोऽस्मि ।

**गौतमी**—जाते, मुहूर्तं मा लज्जस्व । अपनेष्यामि तावत्तेऽवगुण्ठनम् । ततस्त्वां भर्ताभिज्ञास्यति । ( इति यथोक्तं करोति । )

**राजा**—( शकुन्तलां निर्वर्ण्य आत्मगतम् )

इदमुपनतमेवं रूपमाक्लिष्टकान्ति
प्रथमपरिगृहीतं स्यान्न वेत्यव्यवस्यन् ।
भ्रमर इव विभाते कुन्दमन्तस्तुषारं
न च खलु परिभोक्तुं नैव शक्नोमि हातुम् ॥ १९ ॥

( इति विचारयन्स्थितः । )

**प्रतीहारी**—अहो धर्मावेक्षिता भर्तुः । ईदृशं नाम सुखोपनतं रूपं दृष्ट्वा कोऽन्यो विचारयति ?

**शार्ङ्गरवः**—भो राजन्, किमिति जोषमास्यते ?

**राजा**—भोस्तपोधनाः, चिन्तयन्नपि न खलु स्वीकरणमत्रभवत्याः स्मरामि । तत्कथमिमामभिव्यक्तसत्त्वलक्षणां प्रत्यात्मानं क्षेत्रिणमाशङ्कमानः प्रतिपत्स्ये ?

**शकुन्तला**—( अपवार्य ) आर्यस्य परिणय एव संदेहः । कुत इदानीं मे दूराधिरोहिण्याशा ?

**शार्ङ्गरवः**—मा तावत् ।

कृताभिमर्शामनुमन्यमानः ।
सुतां त्वया नाम मुनिर्विमान्यः ।
मुष्टं प्रतिग्राहयता स्वमर्थं
पात्रीकृतो दस्युरिवासि येन ॥ २० ॥

**शारद्वतः**—शार्ङ्गरव, विरम त्वमिदानीम् । शकुन्तले, वक्तव्यमुक्तमस्माभिः । सोऽयमत्रभवानेवमाह । दीयतामस्मै प्रत्ययप्रतिवचनम् ।

**शकुन्तला**—( अपवार्य ) इदमवस्थान्तरं गते तादृशेऽनुरागे किं वा स्मारितेन ? आत्मेदानीं मे शोचनीय इति व्यवसितमेतत् । आर्यपुत्र, संशयित इदानीं नैष समुदाचारः । पौरव, न युक्तं नाम ते तथा पुराश्रमपदे स्वभावोत्तानहृदयमिमं जनं समयपूर्वं प्रतार्य सांप्रतमीदृशैरक्षरैः प्रत्याख्यातुम् ।

**राजा**—( कर्णौ पिधाय ) शान्तं पापम् ।

व्यपदेशमाविलयितुं किमीहसे जनमिमं च पातयितुम् ।
कुलंकषेव सिन्धुः प्रसन्नमम्भस्तटतरुं च ॥ २१ ॥

**शकुन्तला**—भवतु । यदि परमार्थतः परपरिग्रहशङ्किना त्वयैवं वक्तुं प्रवृत्तं तदभिज्ञानेनामुना तवाशङ्कामपनेष्यामि ।

**राजा**—उदारः कल्पः ।

**शकुन्तला**—( मुद्रास्थानं परामृश्य ) हा धिक् ! हा धिक् ! अङ्गुलीयकशून्या मेऽङ्गुलिः ।

**गौतमी**—नूनं ते शक्रावताराभ्यन्तरे शचीतीर्थसलिलं वन्दमानायाः प्रभ्रष्टमङ्गुलीयकम् ।

**राजा**—( सस्मितम् ) इदं तत्प्रत्युत्पन्नमति स्त्रैणमिति यदुच्यते ।

**शकुन्तला**—अत्र तावद्विधिना दर्शितं प्रभुत्वम् । अपरं ते कथयिष्यामि ।

**राजा**—श्रोतव्यमिदानीं संवृत्तम् ।

**शकुन्तला**—नन्वेकस्मिन्दिवसे नवमालिकामण्डपे नलिनीपत्रभाजनगतमुदकं तव हस्ते संनिहितमासीत् ।

**राजा**—शृणुमस्तावत् ।

**शकुन्तला**—तत्क्षणे स मे पुत्रकृतको दीर्घापाङ्गो नाम मृगपोतक उपस्थितः। त्वयायं तावत्प्रथमं पिबत्वित्यनुकम्पिनोपच्छन्दित उदकेन, न पुनस्तेऽपरिचयाद्धस्ताभ्याशमुपगतः। पश्चात्तस्मिन्नेव मया गृहीते सलिले कृतस्तेन प्रणयः। तदा त्वमित्थं प्रहसितोऽसि—सर्वः सगन्धेषु विश्वसिति, द्वावप्यत्रारण्यकाविति।

**राजा**—एवमादिभिरात्मकार्यनिर्वर्तिनीनामनृतमयवाङ्मधुभिराकृष्यन्ते विषयिणः।

**गौतमी**—महाभाग, नार्हस्येवं मन्त्रयितुम्। तपोवनसंवर्धितोऽनभिज्ञोऽयं जनः कैतवस्य।

**राजा**—तापसवृद्धे,

स्त्रीणामशिक्षितपटुत्वममानुषीषु
संदृश्यते किमुत याः प्रतिबोधवत्यः।
प्रागन्तरिक्षगमनात्स्वमपत्यजात-
मन्यैर्द्विजैः परभृताः खलु पोषयन्ति ॥ २२ ॥

**शकुन्तला**—( सरोषम् ) अनार्य, आत्मनो हृदयानुमानेन पश्यसि। क इदानीमन्यो धर्मकञ्चुकप्रवेशिनस्तृणच्छन्नकूपोपमस्य तवानुकृतिं प्रतिपत्स्यते ?

**राजा**—( आत्मगतम् ) संदिग्धबुद्धिं मां कुर्वन्नकैतव इवास्याः कोपो लक्ष्यते। तथा ह्यनया

मय्येव विस्मरणदारुणचित्तवृत्तौ
वृत्तं रहः प्रणयमप्रतिपद्यमाने।
भेदाद्भ्रुवोः कुटिलयोरतिलोहिताक्ष्या
भग्नं शरासनमिवातिरुषा स्मरस्य ॥ २३ ॥

( प्रकाशम् ) भद्रे, प्रथितं दुष्यन्तस्य चरितम् । तथापीदं न लक्षये ।

**शकुन्तला**—सुष्ठु तावदत्र स्वच्छन्दचारिणी कृतास्मि, याहमस्य पुरुवंशप्रत्ययेन मुखमधोर्हृदयस्थितविषस्य हस्ताभ्याशमुपगता । ( इति पटान्तेन मुखमावृत्य रोदिती । )

**शार्ङ्गरवः**—इत्थमात्मकृतं प्रतिहतं चापलं दहति ।

अतः परीक्ष्य कर्तव्यं विशेषात्संगतं रहः ।
अज्ञातहृदयेष्वेवं वैरीभवति सौहृदम् ॥ २४ ॥

**राजा**—अयि भोः, किमत्रभवतीप्रत्ययादेवास्मान्संवृतदोषाक्षरैः क्षिणुथ ?

**शार्ङ्गरवः**—( सासूयम् ) श्रुतं भवद्भिरधरोत्तरम् ।

आ जन्मनः शाठ्यमशिक्षितो य-
स्तस्याप्रमाणं वचनं जनस्य ।
परातिसंधानमधीयते यै-
र्विद्येति ते सन्तु किलाप्तवाचः ॥ २५ ॥

**राजा**—भोः सत्यवादिन्, अभ्युपगतं तावदस्माभिरेवम् । किं पुनरिमामतिसंधाय लभ्यते ?

**शार्ङ्गरवः**—विनिपातः ।

**राजा**—विनिपातः पौरवैः प्रार्थ्यत इति न श्रद्धेयम् ।

**शारद्वतः**—शार्ङ्गरव, किमुत्तरोत्तरेण ? अनुष्ठितो गुरोः संदेशः । प्रतिनिवर्तामहे वयम् । ( राजानं प्रति ) राजन्,

तदेषा भवतः कान्ता त्यज वैनां गृहाण वा ।
उपपन्ना हि दारेषु प्रभुता सर्वतोमुखी ॥ २६ ॥

गौतमि, गच्छाग्रतः ।

( इति प्रस्थिताः । )

**शकुन्तला**—हम्, अमुना तावत् कितवेन विप्रलब्धास्मि । यूयमपि मां परित्यजथ ? ( इत्यनुप्रतिष्ठते । )

**गौतमी**—( स्थित्वा ) वत्स शार्ङ्गरव, अनुगच्छतीयं खलु नः करुणपरिदेविनी शकुन्तला । प्रत्यादेशपरुषे भर्तरि किं वा मे पुत्रिका करोतु ?

**शार्ङ्गरवः**—( सरोषं निवृत्य ) किं पुरोभागे स्वातन्त्र्यमवलम्बसे ?

( शकुन्तला भीता वेपते । )

**शार्ङ्गरवः**—शकुन्तले,

यदि यथा वदति क्षितिपस्तथा
त्वमसि किं पितुरुत्कुलया त्वया ।
अथ तु वेत्सि शुचि व्रतमात्मनः
पतिकुले तव दास्यमपि क्षमम् ॥ २७ ॥

तिष्ठ । साधयामो वयम् ।

**राजा**—भोस्तपस्विन्, किमत्रभवतीं विप्रलभसे ।

कुमुदान्येव शशाङ्कः सविता बोधयति पङ्कजान्येव ।
वशिनां हि परपरिग्रहसंश्लेषपराङ्मुखी वृत्तिः ॥ २८ ॥

**शार्ङ्गरवः**—यदा तु पूर्ववृत्तमन्यासङ्गाद्विस्मृतो भवान्, तदा कथमधर्मभीरुता ?

**राजा**—भवन्तमेवात्र गुरुलाघवं पृच्छामि ।

मूढः स्यामहमेषा वा वदेन्मिथ्येति संशये ।
दारत्यागी भवाम्याहो परस्त्रीस्पर्शपांसुलः ॥ २९ ॥

**पुरोहितः**—( विचार्य ) यदि तावदेवं क्रियताम् ।

**राजा**—अनुशास्तु मां भवान् ।

**पुरोहितः**—अत्रभवती तावदा प्रसवादस्मद्गृहे तिष्ठतु । कुत इदमुच्यत इति चेत्, त्वं साधुभिरादिष्टपूर्वः प्रथममेव चक्रवर्तिनं पुत्रं जनयिष्यसीति । स चेन्मुनिदौहित्रस्तल्लक्षणोपपन्नो भविष्यति, अभिनन्द्य शुद्धान्तमेनां प्रवेशयिष्यसि । विपर्यये तु पितुरस्याः समीपनयनमवस्थितमेव ।

**राजा**—यथा गुरुभ्यो रोचते ।

**पुरोहितः**—वत्से, अनुगच्छ माम् ।

**शकुन्तला**—भगवति वसुधे, देहि मे विवरम् ।

( इति रुदती प्रस्थिता । निष्क्रान्ता सह पुरोधसा तपस्विभिश्च । )

( राजा शापव्यवहितस्मृतिः शकुन्तलागतमेव चिन्तयति । )

—शाकुन्तले पञ्चमोऽङ्कः ।

---

This dialogue shows the picture of Society during the time of Kalidasa, thus evidencing his study of the depth of human nature. We see here how the poor suffer at the hands of the police when they have the misfortune of falling into their hands.

( ततः प्रविशति नागरिकः श्यालः पश्चाद्बद्धपुरुषमादाय रक्षिणौ च । )

**रक्षिणौ**—( ताडयित्वा ) अरे कुम्भीरक, कथय कुत्र त्वयैतन्मणिबन्धनोत्कीर्णनामधेयं राजकीयमङ्गुलीयकं समासादितम् ।

**पुरुषः**—( भीतिनाटितकेन ) प्रसीदन्तु भावमिश्राः । अहं नेदृशकर्मकारी ।

**प्रथमः**—किं शोभनो ब्राह्मण इति कलयित्वा राज्ञा प्रतिग्रहो दत्तः ?

**पुरुषः**—शृणुतेदानीम् । अहं शक्रावताराभ्यन्तरवासी धीवरः ।

**द्वितीयः**—पाटच्चर, किमस्माभिर्जातिः पृष्टा ?

**श्यालः**—सूचक, कथयतु सर्वमनुक्रमेण । मैनमन्तरे प्रतिबध्नीतम् ।

**उभौ**—यदावुत्त आज्ञापयति । कथय ।

**पुरुषः**—अहं जालोद्गालादिभिर्मत्स्यबन्धनोपायैः कुटुम्बभरणं करोमि ।

**श्यालः**—( विहस्य ) विशुद्ध इदानीमाजीवः ।

**पुरुषः**—

सहजं किल यद्विनिन्दितं न खलु तत्कर्म विवर्जनीयम् ।
पशुमारणकर्मदारुणोऽनुकम्पामृदुरेव श्रोत्रियः ॥ १ ॥

**श्यालः**—ततस्ततः ।

**पुरुषः**—एकस्मिन्दिवसे खण्डशो रोहितमत्स्यो मया कल्पितो यावत् । तस्योदराभ्यन्तर इदं रत्नभासुरमङ्गुलीयं दृष्ट्वा पश्चादहं तस्य विक्रयाय दर्शयन्गृहीतो भावमिश्रैः । मारयत वा मुञ्चत वा । अयमस्यागमवृत्तान्तः ।

**श्यालः**—जानुक, विस्रगन्धी गोधादी मत्स्यबन्ध एव निःसंशयम् । अङ्गुलीयकदर्शनमस्य विमर्शयितव्यम् । राजकुलमेव गच्छामः

**रक्षिणौ**—तथा । गच्छ अरे गण्डभेदक ।

( सर्वे परिक्रामन्ति । )

**श्यालः**—सूचक, इमं गोपुरद्वारेऽप्रमत्तौ प्रतिपालयतं यावदिदमङ्गुलीयकं यथागमनं भर्तुर्निवेद्य ततः शासनं प्रतीक्ष्य निष्क्रमामि

**उभौ**—प्रविशत्वावुत्तः स्वामिप्रसादाय ।

( इति निष्क्रान्तः श्यालः । )

**प्रथमः**—जानुक, चिरायते खल्वावुत्तः ।

**द्वितीयः**—नन्ववसरोपसर्पणीया राजानः ।

**प्रथमः**—जानुक, प्रस्फुरतो मम हस्तावस्य वधार्थं सुमनसः पिनद्धुम् । ( इति पुरुषं निर्दिशति । )

**पुरुषः**—नार्हति भावोऽकारणमारणं भावयितुम् ।

**द्वितीयः**—( विलोक्य ) एष नौ स्वामी पत्रहस्तो राजशासनं प्रतीक्ष्येतोमुखो दृश्यते । गृध्रबलिर्भविष्यसि, शुनो मुखं वा द्रक्ष्यसि ।

( प्रविश्य । )

**श्यालः**—सूचक, मुच्यतामेष जालोपजीवी । उपपन्नः खल्वङ्गुलीयस्यागमः ।

**सूचकः**—यथावुत्तो भणाति ।

**द्वितीयः**—एष यमसदनं प्रविश्य प्रतिनिवृत्तः । ( इति पुरुषं परिमुक्तबन्धनं करोति । )

**पुरुषः**—( श्यालं प्रणम्य ) भर्तः, अथ कीदृशो म आजीवः ?

**श्यालः**—एष भर्त्राङ्गुलीयकमूल्यसंमितः प्रसादोऽपि दापितः । ( इति पुरुषाय स्वं प्रयच्छति । )

**पुरुषः**—( सप्रणामं प्रतिगृह्य ) भर्तः, अनुगृहीतोऽस्मि ।

**सूचकः**—एष नामानुग्रहो यच्छूलादवतार्य हस्तिस्कन्धे प्रतिष्ठापितः ।

**जानुकः**—आवुत्त, परितोषं कथय । तेनाङ्गुलीयकेन भर्तुः संमतेन भवितव्यम् ।

**श्यालः**—न तस्मिन्महार्हे रत्नं भर्तुर्बहुमतमिति तर्कयामि। तस्य दर्शनेन भर्तुरभिमतो जनः स्मारितः। मुहूर्तं प्रकृतिगम्भीरोऽपि पर्युत्सुकमना आसीत्।

**सूचकः**—सेवितं नामावुत्तेन।

**जानुकः**—ननु भण—अस्य कृते मत्स्यशत्रोरिति। (इति पुरुषमसूयया पश्यति।)

**पुरुषः**—भट्टारक, इतोऽर्धं युष्माकं सुमनोमूल्यं भवतु।

**जानुकः**—एतावद्युज्यते।

**श्यालः**—धीवर, महत्तरस्त्वं प्रियवयस्यक इदानीं मे संवृत्तः। कादम्बरीसाक्षिकमस्माकं प्रथमसौहृदमिष्यते। तच्छौण्डिकापणमेव गच्छामः। (इति निष्क्रान्ताः सर्वे।)

शाकुन्तले षष्ठोऽङ्कः।

---

Remembrance and Recognition of Shakuntala by means of the Ring brought by the fisherman.

**राजा**—वयस्य, रन्ध्रोपनिपातिनोऽनर्था इति यदुच्यते तद्व्यभिचारि वचः। कुतः?

मुनिसुताप्रणयस्मृतिरोधिना
मम च मुक्तमिदं तमसा मनः।
मनसिजेन सखे प्रहरिष्यता
धनुषि चूतशरश्च निवेशितः॥ ८॥

**विदूषकः**—तिष्ठ तावत्। अनेन दण्डकाष्ठेन कन्दर्पव्याधिं नाशयिष्यामि। (इति दण्डकाष्ठमुद्यम्य चूताङ्कुरं पातयितुमिच्छति।)

**राजा**—( सस्मितम् ) भवतु । दृष्टं ब्रह्मवर्चसम् । सखे, क्वोपविष्टः प्रियायाः किंचिदनुकारिणीषु लतासु दृष्टिं विलोभयामि ?

**विदूषकः**—नन्वासन्नपरिचारिका चतुरिका भवता संदिष्टा । माधवीमण्डप इमां वेलामतिवाहयिष्ये । तत्र मे चित्रफलकगतां स्वहस्तलिखितां तत्रभवत्याः शकुन्तलायाः प्रतिकृतिमानयेति ।

**राजा**—ईदृशं हृदयविनोदनस्थानम् । तत्तमेव मार्गमादेशय ।

**विदूषकः**—इत इतो भवान् ।

( उभौ परिक्रामतः । सानुमत्यनुगच्छति । )

**विदूषकः**—एष मणिशिलापट्टकसनाथो माधवीमण्डप उपहाररमणीयतया निःसंशयं स्वागतेनेव नौ प्रतीच्छति । तत्प्रविश्य निषीदतु भवान् ।

( उभौ प्रवेशं कृत्वोपविष्टौ । )

**सानुमती**—लतासंश्रिता द्रक्ष्यामि तावत्सख्याः प्रतिकृतिम् । ततोऽस्या भर्तुर्बहुमुखमनुरागं निवेदयिष्यामि । ( इति तथा कृत्वा स्थिता । )

**राजा**—सखे, सर्वमिदानीं स्मरामि शकुन्तलायाः प्रथमवृत्तान्तम् । कथितवानस्मि भवते च । स भवान्प्रत्यादेशवेलायां मत्समीपगतो नासीत् । पूर्वमपि न त्वया कदाचित्संकीर्तितं तत्रभवत्या नाम । कच्चिदहमिव विस्मृतवानसि त्वम् ?

**विदूषकः**—न विस्मरामि । किंतु सर्वं कथयित्वावसाने पुनस्त्वया परिहासविजल्प एष न भूतार्थ इत्याख्यातम् । मयापि मृत्पिण्डबुद्धिना तथैव गृहीतम् । अथवा भवितव्यता खलु बलवती ।

**सानुमती**—एवमेवैतत् ।

**राजा**—( ध्यात्वा ) सखे, त्रायस्व माम् ।

**विदूषकः**—भोः, किमेतत् । अनुपपन्नं खल्वीदृशं त्वयि । कदापि सत्पुरुषाः शोकवक्तव्या न भवन्ति । ननु प्रवातेऽपि निष्कम्पा गिरयः ।

**राजा**—वयस्य, निराकारणविक्लवायाः प्रियायाः समवस्थामनुस्मृत्य बलवदशरणोऽस्मि । सा हि

इतः प्रत्यादेशात्स्वजनमनुगन्तुं व्यवसिता
मुहुस्तिष्ठेत्युच्चैर्वदति गुरुशिष्ये गुरुसमे ।
पुनर्दृष्टिं बाष्पप्रसरकलुषामर्पितवती
मयि क्रूरे यत्तत्सविषमिव शल्यं दहति माम् ॥ ९ ॥

**सानुमती**—अहो, ईदृशी स्वकार्यपरता । अस्य संतापेनाहं रमे ।

**विदूषकः**—भोः, अस्ति मे तर्कः केनापि तत्रभवत्याकाशचारिणा नीतेति ।

**राजा**—कः पतिदेवतामन्यः परामर्ष्टुमुत्सहेत । मेनका किल सख्यास्ते जन्मप्रतिष्ठेति श्रुतवानस्मि । तत्सहचारिणीभिः सखी ते हृतेति मे हृदयमाशङ्कते ।

**सानुमती**—संमोहः खलु विस्मयनीयो न प्रतिबोधः ।

**विदूषकः**—यद्येवमस्ति खलु समागमः कालेन तत्रभवत्या ।

**राजा**—कथमिव ?

**विदूषकः**—न खलु मातापितरौ भर्तृवियोगदुःखितां दुहितरं द्रष्टुं पारयतः ।

**राजा**—वयस्य,

स्वप्नो नु माया नु मतिभ्रमो नु
क्लिष्टं नु तावत्फलमेव पुण्यम् ।
असंनिवृत्त्यै तदतीतमेते
मनोरथा नाम तटप्रपाताः ॥ १० ॥

**विदूषकः**—मैवम् । नन्वङ्गुलीयकमेव निदर्शनमवश्यंभाविनः अचिन्तनीयः समागमो भवतीति ।

**राजा**—( अङ्गुलीयकं विलोक्य ) अये, इदं तावदसुलभस्थानभ्रंशि शोचनीयम् ।

तव सुचरितमङ्गुलीय नूनं
प्रतनु ममेव विभाव्यते फलेन ।
अरुणनखमनोहरासु तस्या-
श्च्युतमसि लब्धपदं यदङ्गुलीषु ॥ ११ ॥

**सानुमती**—यद्यन्यहस्तगतं भवेत् सत्यमेव शोचनीयं भवेत् ।

**विदूषकः**—भोः, इयं नाममुद्रा केनोपायेन तत्रभवत्या हस्ताभ्याशं प्रापिता ?

**सानुमती**—ममापि कौतुहलेनाकारित एषः ।

**राजा**—श्रूयताम् । तदा स्वनगराय प्रस्थितं मां प्रिया सबाष्पमिदमाह 'कियच्चिरेणार्यपुत्रः प्रतिपत्तिं दास्यति' इति ।

**विदूषकः**—ततस्ततः ।

**राजा**—पश्चादिमां मुद्रां तदङ्गुलौ निवेशयता मया प्रत्यभिहिता ।

एकैकमत्र दिवसे दिवसे मदीयं
नामाक्षरं गणय गच्छति यावदन्तम् ।
तावत्प्रिये मदवरोधगृहप्रवेशं
नेता जनस्तव समीपमुपैष्यतीति ॥ १२ ॥

तच्च दारुणात्मना मया मोहान्नानुष्ठितम् ।

**सानुमती**—रमणीयः खल्ववधिर्विधिना विसंवादितः ।

**विदूषकः**—कथं धीवरकल्पितस्य रोहितमत्स्यस्योदराभ्यन्तर आसीत् ?

**राजा**—शचीतीर्थं वन्दमानायाः सख्यास्ते हस्ताद्गङ्गास्रोतसि परिभ्रष्टम् ।

**विदूषकः**—युज्यते ।

**सानुमती**—अत एव तपस्विन्याः शकुन्तलाया अधर्मभीरोरस्य राजर्षेः परिणये संदेह आसीत् । अथवेदृशोऽनुरागोऽभिज्ञानमपेक्षते. कथमिवैतत् ?

**राजा**—उपालप्स्ये तावदिदमङ्गुलीयकम् ।

**विदूषकः**—( आत्मगतम् ) गृहीतोऽनेन पन्था उन्मत्तानाम् ।

**राजा**—

कथं नु तं बन्धुरकोमलाङ्गुलिं
करं विहायासि निमग्नमम्भसि ।

अथवा—

अचेतनं नाम गुणं न लक्षये-
न्मयैव कस्मादवधीरिता प्रिया ॥ १३ ॥

**विदूषकः**—( आत्मगतम् ) कथं बुभुक्षया खादितव्योऽस्मि ।

**राजा**—अकारणपरित्यागानुशयतप्तहृदयस्तावदनुकम्प्यतामयं जनः पुनर्दर्शनेन ।

( प्रविश्यापटीक्षेपेण चित्रफलकहस्ता । )

**चतुरिका**—इयं चित्रगता भट्टिनी । ( इति चित्रफलकं दर्शयति । )

**विदूषकः**—साधु वयस्य, मधुरसंस्थानदर्शनीयो भावानुप्रवेशः स्खलतीव मे दृष्टिर्निम्नोन्नतप्रदेशेषु ।

**सानुमती**—अहो एषा राजर्षेर्निपुणता । जाने सख्यग्रतो मे वर्तत इति ।

**राजा**—

यद्यत्साधु न चित्रे स्यात्क्रियते तत्तदन्यथा ।
तथापि तस्या लावण्यं रेखया किंचिदन्वितम् ॥ १४ ॥

**सानुमती**—सदृशमेतत्पश्चात्तापगुरोः स्नेहस्यानवलेपस्य च ।

**विदूषकः**—भोः, इदानीं तिस्रस्तत्रभवत्यो दृश्यन्ते । सर्वाश्च दर्शनीयाः । कतमात्र तत्रभवती शकुन्तला ?

**सानुमती**—अनभिज्ञः खल्वीदृशस्य रूपस्य मोहदृष्टिरयं जनः ।

**राजा**—त्वं तावत्कतमां तर्कयसि ?

**विदूषकः**—तर्कयामि यैषा शिथिलकेशबन्धनोद्वान्तकुसुमेन केशान्तेनोद्भिन्नस्वेदबिन्दुना वदनेन विशेषतोऽपसृताभ्यां बाहुभ्यामवसेकस्निग्धतरुणपल्लवस्य चूतपादपस्य पार्श्वे ईषत्परिश्रान्तेवालिखिता सा शकुन्तला, इतरे सख्याविति ।

**राजा**—निपुणो भवान् । अस्त्यत्र मे भावचिह्नम् ।

स्विन्नाङ्गुलिविनिवेशो रेखाप्रान्तेषु दृश्यते मलिनः ।
अश्रु च कपोलपतितं दृश्यमिदं वर्तिकोच्छ्वासात् ॥ १५ ॥

चतुरिके, अर्धलिखितमेतद्विनोदस्थानमस्माभिः । गच्छ, वर्तिकां तावदानय ।

**चतुरिका**—आर्य माढव्य, अवलम्बस्व चित्रफलकं यावदागच्छामि ।

**राजा**—अहमेवैतदवलम्बे । ( इति यथोक्तं करोति । )

( निष्क्रान्ता चेटी । )

**राजा**—अहं हि—

साक्षात्प्रियामुपगतामपहाय पूर्वं
चित्रार्पितां पुनरिमां बहु मन्यमानः ।
स्रोतोवहां पथि निकामजलामतीत्य
जातः सखे प्रणयवान्मृगतृष्णिकायाम् ॥ १६ ॥

**विदूषकः**—( आत्मगतम् ) एषोऽत्रभवान्नदीमतिक्रम्य मृगतृष्णिकां संक्रान्तः । भोः, अपरं किमत्र लिखितव्यम् ?

**सानुमती**—यो यः प्रदेशः सख्या मेऽभिरूपस्तं तमालिखितव्यम् ।

**राजा**—श्रूयताम् ।

कार्या सैकतलीनहंसमिथुना स्रोतोवहा मालिनी
पादास्तामभितो निषण्णहरिणा गौरीगुरोः पावनाः ।
शाखालम्बितवल्कलस्य च तरोर्निर्मातुमिच्छाम्यधः
शृङ्गे कृष्णमृगस्य वामनयनं कण्डूयमानां मृगीम् ॥ १७ ॥

**विदूषकः**—( आत्मगतम् ) यथाहं पश्यामि तथा पूरितव्यमनेन चित्रफलकं लम्बकूर्चानां तापसानां कदम्बैः ।

**राजा**—वयस्य, अन्यच्च शकुन्तलायाः प्रसाधनमभिप्रेतमस्माभिः ।

**विदूषकः**—किमिव ?

**सानुमती**—वनवासस्य सौकुमार्यस्य विनयस्य च यत्सदृशं भविष्यति ।

**राजा**—

कृतं न कर्णार्पितबन्धनं सखे
शिरीषमागण्डविलम्बिकेसरम् ।
न वा शरच्चन्द्रमरीचिकोमलं
मृणालसूत्रं रचितं स्तनान्तरे ॥ १८ ॥

**विदूषकः**—भोः, किं नु तत्रभवती रक्तकुवलयपल्लवशोभिनाग्रहस्तेन मुखमपवार्य चकितचकितेव स्थिता । ( सावधानं निरूप्य ) आः ! एष दास्याः पुत्रः कुसुमरसपाटच्चरस्तत्रभवत्या वदनमभिलङ्घति मधुकरः ।

**राजा**—ननु वार्यतामेष धृष्टः ।

**विदूषकः**—भवानेवाविनीतानां शासितास्य वारणे प्रभविष्यति ।

**राजा**—युज्यते । अयि भोः कुसुमलताप्रियातिथे, किमत्र परिपतनखेदमनुभवसि ?

एषा कुसुमनिषण्णा तृषितापि सती भवन्तमनुरक्ता ।
प्रतिपालयति मधुकरी न खलु मधु विना त्वया पिबति ॥ १९ ॥

**सानुमती**—अद्याभिजातं खल्वेष वारितः ।

**विदूषकः**—प्रतिषिद्धापि वामैषा जातिः ।

**राजा**—एवं भोः, न मे शासने तिष्ठसि । श्रूयतां तर्हि संप्रति ।

अक्लिष्टबालतरुपल्लवलोभनीयं
पीतं मया सदयमेव रतोत्सवेषु ।
बिम्बाधरं स्पृशसि चेद्भ्रमर प्रियाया-
स्त्वां कारयामि कमलोदरबन्धनस्थम् ॥ २० ॥

**विदूषकः**—एवं तीक्ष्णदण्डस्य किं न भेष्यति ? ( प्रहस्य आत्मगतम् ) एष तावदुन्मत्तः । अहमप्येतस्य सङ्गेनेदृशावर्ण इव संवृत्तः प्रकाशम्, चित्रं खल्वेतत् ।

**राजा**—कथं चित्रम् ?

**सानुमती**—अहमपीदानीमवगतार्था, किं पुनर्यथालिखितानुभाव्येषः ?

**राजा**—वयस्य, किमिदमनुष्ठितं पौरोभाग्यम् ?

दर्शनसुखमनुभवतः साक्षादिव तन्मयेन हृदयेन ।
स्मृतिकारिणा त्वया मे पुनरपि चित्रीकृता कान्ता ॥ २१ ॥

( इति बाष्पं विहरति । )

**सानुमती**—पूर्वापरविरोध्यपूर्व एष विरहमार्गः ।

**राजा**—वयस्य, कथमेवमविश्रान्तदुःखमनुभवामि ?

प्रजागरात्खिलीभूतस्तस्याः स्वप्ने समागमः ।
बाष्पस्तु न ददात्येनां द्रष्टुं चित्रगतामपि ॥ २२ ॥

**सानुमती**—सर्वथा प्रमार्जितं त्वया प्रत्यादेशदुःखं शकुन्तलायाः ।

—शाकुन्तले षष्ठोऽङ्कः ।

---

Reunion of Dushyanta & Shakuntala at the hermitage of Maricha.

**राजा**——( कर्णं दत्त्वा ) अभूमिरियमविनयस्य । को नु खल्वेष निषिध्यते ? ( शब्दानुसारेणावलोक्य, सविस्मयम् ) अये, को नु खल्वयमनुबध्यमानस्तपस्विनीभ्यामबालसत्त्वो बालः ?

अर्धपीतस्तनं मातुरामर्दक्लिष्टकेसरम् ।
प्रक्रीडितुं सिंहशिशुं बलात्कारेण कर्षति ॥ १४ ॥

( ततः प्रविशति यथानिर्दिष्टकर्मा तपस्विनीभ्यां बालः । )

**बालः**——जृम्भस्व, जृम्भस्व सिंह, दन्तांस्ते गणयिष्ये ।

**प्रथमा**——अविनीत, किं नोऽपत्यनिर्विशेषाणि सत्त्वानि विप्रकरोषि । हन्त, वर्धते तव संरम्भः । स्थाने खलु ऋषिजनेन सर्वदमन इति कृतनामधेयोऽसि ।

**राजा**——किं न खलु बालेऽस्मिन्नौरस इव पुत्रे स्निह्यति मे मनः ? नूनमनपत्यता मां वत्सलयति ।

**द्वितीया**——एषा खलु केसरिणी त्वां लङ्घयिष्यति यदि तस्याः पुत्रकं न मुञ्चसि ।

**बालः**——( सस्मितम् ) अहो, बलीयः खलु भीतोऽस्मि । ( इत्यधरं दर्शयति । )

**राजा**——

महतस्तेजसो बीजं बालोऽयं प्रतिभाति मे ।
स्फुलिङ्गावस्थया वह्निरेधापेक्ष इव स्थितः ॥ १५ ॥

**प्रथमा**——वत्स, एनं बालमृगेन्द्रं मुञ्च । अपरं ते क्रीडनकं दास्यामि ।

**बालः**—कुत्र ? देह्येतत् । ( इति हस्तं प्रसारयति । )

**राजा**—( दृष्ट्वा, सविस्मयम् ) कथं चक्रवर्तिलक्षणमप्यनेन धार्यते तथा ह्यस्य—

प्रलोभ्यवस्तुप्रणयप्रसारितो
विभाति जालग्रथिताङ्गुलिः करः ।
अलक्ष्यपत्रान्तरमिद्धरागया
नवोषसा भिन्नमिवैकपङ्कजम् ॥ १६ ॥

**द्वितीया**—सुव्रते, न शक्य एष वाचामात्रेण विरमयितुम् गच्छ त्वम् । मदीय उटजे मार्कण्डेयस्यर्षिकुमारस्य वर्णचित्रितो मृत्तिकामयूरस्तिष्ठति, तमस्योपहर ।

**प्रथमा**—तथा । ( इति निष्क्रान्ता । )

**बालः**—अनेनैव तावत्क्रीडिष्यामि । ( इति तापसीं विलोक्य हसति । )

**राजा**—स्पृहयामि खलु दुर्ललितायास्मै ।

आलक्ष्यदन्तमुकुलाननिमित्तहासै-
रव्यक्तवर्णरमणीयवचःप्रवृत्तीन् ।
अङ्काश्रयप्रणयिनस्तनयान्वहन्तो
धन्यास्तदङ्गरजसा मलिनीभवन्ति ॥ १७ ॥

**तापसी**—भवतु । न मामयं गणयति । ( पार्श्वमवलोकयन्ती ) कोऽत्र ऋषिकुमाराणाम् ? ( राजानमवलोक्य ) भद्रमुख, एहि तावत् । मोचयानेन दुर्मोक्हस्तग्रहेण डिम्भलीलया बाध्यमानं बालमृगेन्द्रम् ।

**राजा**—( उपगम्य सस्मितम् ) अयि भो महर्षिपुत्र,

एवमाश्रमविरुद्धवृत्तिना
संयमः किमिति जन्मतस्त्वया ।
सत्त्वसंश्रयसुखोऽपि दूष्यते
कृष्णसर्पशिशुनेव चन्दनः ॥ १८ ॥

**तापसी**—भद्रमुख, न खल्वयं ऋषिकुमारः ।

**राजा**—आकारसदृशं चेष्टितमेवास्य कथयति । स्थानप्रत्ययात्तु वयमेवंतर्किणः । ( यथाभ्यर्थितमनुतिष्ठन्बालस्पर्शमुपलभ्य, आत्मगतम् )

अनेन कस्यापि कुलाङ्कुरेण
स्पृष्टस्य गात्रेषु सुखं ममैवम् ।
कां निर्वृतिं चेतसि तस्य कुर्या-
द्यस्यायमाङ्गात्कृतिनः प्ररूढः ॥ १९ ॥

**तापसी**—( उभौ निर्वर्ण्य ) आश्चर्यमाश्चर्यम् ।

**राजा**—आर्ये, किमिव ?

**तापसी**—अस्य बालस्य तेऽपि संवादिन्याकृतिरिति विस्मापितास्मि । अपरिचितस्यापि तेऽप्रतिलोमः संवृत्त इति ।

**राजा**—( बालकमुपलालयन् ) न चेन्मुनिकुमारोऽयम्, अथ कोऽस्य व्यपदेशः ?

**तापसी**—पुरुवंशः ।

**राजा**—( आत्मगतम् ) कथमेकान्वयो मम । अतः खलु मदनुकारिणमेनमत्रभवती मन्यते । अस्त्येतत्पौरवाणामन्त्यं कुलव्रतम् ।

भवनेषु रसाधिकेषु पूर्वं
क्षितिरक्षार्थमुशन्ति ये निवासम् ।
नियतैकपतिव्रतानि पश्चा-
त्तरुमूलानि गृहीभवन्ति तेषाम् ॥ २० ॥

( प्रकाशम् ) न पुनरात्मगत्या मानुषाणामेष विषयः ।

**तापसी**—यथा भद्रमुखो भणति—अप्सरःसंबन्धेनास्य जनन्यत्र देवगुरोस्तपोवने प्रसूता ।

**राजा**—( अपवार्य ) हन्त, द्वितीयमिदमाशाजननम् ( प्रकाशम् ) अथ सा तत्रभवती किमाख्यस्य राजर्षेः पत्नी ?

**तापसी**—कस्तस्य धर्मदारपरित्यागिनो नाम संकीर्तयितुं चिन्तयिष्यति ?

**राजा**—( स्वगतम् ) इयं खलु कथा मामेव लक्ष्यीकरोति । यदि तावदस्य शिशोर्मातरं नामतः पृच्छामि । अथवानार्यः परदारव्यवहारः ।

( प्रविश्य मृण्मयूरहस्ता )

**तापसी**—सर्वदमन, शकुन्तलावण्यं प्रेक्षस्व ।

**बालः**—( सदृष्टिक्षेपम् ) कुत्र वा मम माता ?

**उभे**—नामसादृश्येन वञ्चितो मातृवत्सलः ।

**द्वितीया**—वत्स, अस्य मृत्तिकामयूरस्य रम्यत्वं पश्येति भणितोऽसि ।

**राजा**—( आत्मगतम् ) किंवा शकुन्तलेत्यस्य मातुराख्या ? सन्ति पुनर्नामधेयसादृश्यानि । अपि नाम मृगतृष्णिकेव नाममात्रप्रस्तावो मे विषादाय कल्पते ?

**बालः**—मातः, रोचते म एष भद्रमयूरः ।

**प्रथमा**—( विलोक्य सोद्वेगम् ) अहो, रक्षाकरण्डकमस्य मणिबन्धे न दृश्यते ।

**राजा**—( शकुन्तलां विलोक्य ) अये, सेयमत्रभवती शकुन्तला । यैषा—

वसने परिधूसरे वसाना
नियमक्षाममुखी धृतैकवेणिः ।
अतिनिष्करुणस्य शुद्धशीला
मम दीर्घं विरहव्रतं बिभर्ति ॥ २१ ॥

**शकुन्तला**—( पश्चात्तापविवर्णं राजानं दृष्ट्वा ) न खल्वार्यपुत्र इव । ततः क एष इदानीं कृतरक्षामङ्गलं दारकं मे गात्रसंसर्गेण दूषयति ?

**बालः**—( मातरमुपेत्य ) मातः, एष कोऽपि पुरुषो मां पुत्र इत्यालिङ्गति ।

**राजा**—प्रिये, क्रौर्यमपि मे त्वयि प्रयुक्तमनुकूलपरिणामं संवृत्तम्, यदहमिदानीं त्वया प्रत्यभिज्ञातमात्मानं पश्यामि ।

**शकुन्तला**—( आत्मगतम् ) हृदय, आश्वासिहि, आश्वसिहि । परित्यक्तमत्सरेणानुकम्पितास्मि दैवेन । आर्यपुत्रः खल्वेषः ।

**राजा**—प्रिये,

स्मृतिभिन्नमोहतमसो दिष्ट्या प्रमुखे स्थितासि मे सुमुखि
उपरागान्ते शशिनः समुपगतो रोहिणीयोगः ॥ २२ ॥

**शकुन्तला**—जयतु जयत्वार्यपुत्रः । ( इत्यर्धोक्ते बाष्पकण्ठी विरमति । )

**राजा**—सुन्दरि,

बाष्पेण प्रतिषिद्धेऽपि जयशब्दे जितं मया ।
यत्ते दृष्टमसंस्कारपाटलोष्ठपुटं मुखम् ॥ २३ ॥

**बालः**—मातः, क एषः ।

**शकुन्तला**—वत्स, ते भागधेयानि पृच्छ ।

**राजा**—( शकुन्तलायाः पादयोः प्रणिपत्य । )

सुतनु हृदयात्प्रत्यादेशव्यलीकमपैतु ते
किमपि मनसः संमोहो मे तदा बलवानभूत् ।
प्रबलतमसामेवंप्रायाः शुभेषु हि प्रवृत्तयः
स्रजमपि शिरस्यन्धः क्षिप्तां धुनोत्यहिशङ्कया ॥ २४ ॥

**शकुन्तला**—उत्तिष्ठत्वार्यपुत्रः । नूनं मे सुचरितप्रतिबन्धकं पुराकृतं तेषु दिवसेषु परिणाममुखमासीत्, येन सानुक्रोशोऽप्यार्यपुत्रो मयि विरसः संवृत्तः ।

( राजोत्तिष्ठति )

**शकुन्तला**—अथ कथमार्यपुत्रेण स्मृतो दुःखभाग्ययं जनः ?

**राजा**—उद्धृतविषादशल्यः कथयिष्यामि ।

मोहान्मया सुतनु पूर्वमुपेक्षितस्ते
यो बाष्पबिन्दुरधरं परिबाधमानः ।
तं तावदाकुटिलपक्ष्मविलग्नमद्य
बाष्पं प्रमृज्य विगतानुशयो भवेयम् ॥ २५ ॥

( इति यथोक्तमनुतिष्ठति । )

**शकुन्तला**—( नाममुद्रां दृष्ट्वा ) आर्यपुत्र, इदं तेऽङ्गुलीयकम् ।

**राजा**—अस्मादङ्गुलीयोपलम्भात्खलु मया स्मृतिरुपलब्धा ।

**शकुन्तला**—विषमं कृतमनेन यत्तदार्यपुत्रस्य प्रत्ययकाले दुर्लभमासीत् ।

**राजा**—तेन हि ऋतुसमवायचिह्नं प्रतिपद्यतां लता कुसुमम् ।

**शकुन्तला**—नास्य विश्वसिमि । आर्यपुत्र एवैतद्धारयतु ।

**( ततः प्रविशति मातलिः । )**

**मातलिः**—दिष्ट्या धर्मपत्नीसमागमेन पुत्रमुखदर्शनेन चायुष्मान्वर्धते ।

**राजा**—अभूत्संपादितस्वादुफलो मे मनोरथः । मातले, न खलु विदितोऽयमाखण्डलेन वृत्तान्तः स्यात् ।

**मातलिः**—( सस्मितम् ) किमीश्वराणां परोक्षम् ? एत्वायुष्मान् । भगवान्मारीचस्ते दर्शनं वितरति ।

**राजा**—शकुन्तले, अवलम्ब्यतां पुत्रः । त्वां पुरस्कृत्य भगवन्तं द्रष्टुमिच्छामि ।

**शकुन्तला**—जिह्रेम्यार्यपुत्रेण सह गुरुसमीपं गन्तुम् ।

**राजा**—अप्याचरितव्यमभ्युदयकालेषु । एह्येहि ।

—शाकुन्तले सप्तमोऽङ्कः ।

---

Dialogue between Chitralekha and Urvashi who was rescued by King Vikrama from the hands of demons who had kidnapped her. King Vikrama and Urvashi inwardly love each other.

( ततः प्रविशति रथारूढो राजा सूतश्च । भयनिमीलिताक्षी चित्रलेखादक्षिणहस्तावलम्बिता उर्वशी च )

**चित्रलेखा**—सखि, समाश्वसिहि, समाश्वसिहि ।

**राजा**—सुन्दरि, समाश्वसिहि ।

गतं भयं भीरु सुरारिसंभवं
त्रिलोकरक्षी महिमा हि वज्रिणः ।
तदेतदुन्मीलय चक्षुरायतं
निशावसाने नलिनीव पङ्कजम् ॥ ६ ॥

**चित्रलेखा**—अहो, कथमुच्छ्वसितमात्रसंभावितजीविता अद्याप्येषा संज्ञां न प्रतिपद्यते ।

**राजा**—बलवदत्र ते सखी परित्रस्ता । तथाहि—

मन्दारकुसुमदाम्ना गुरुरस्याः सूच्यते हृदयकम्पः ।
मुहुरुच्छ्वसता मध्ये परिणाहवतोः पयोधरयोः ॥ ७ ॥

**चित्रलेखा**—( सकरुणम् ) सखि उर्वशि, पर्यवस्थापयात्मानम् । अनप्सरेव प्रतिभासि ।

**राजा**—

मुञ्चति न तावदस्या भयकम्पः कुसुमकोमलं हृदयम् ।
सिचयान्तेन कथंचित्स्तनमध्योच्छ्वासिना कथितः ॥ ८ ॥

( उर्वशी प्रत्यागच्छति )

**राजा**—( सहर्षम् ) चित्रलेखे, दिष्ट्या वर्धसे । प्रकृतिमापन्ना ते प्रियसखी । पश्य—

आविर्भूते शशिनि तमसा मुच्यमानेव रात्रि-
नैशस्यार्चिर्हुतभुज इव च्छिन्नभूयिष्ठधूमा ।
मोहेनान्तर्वरतनुरियं लक्ष्यते मुक्तकल्पा
गङ्गा रोधःपतनकलुषा गच्छतीव प्रसादम् ॥ ९ ॥

**चित्रलेखा**—सखि उर्वशि, विस्रब्धा भव । आपन्नानुकम्पिना महाराजेन प्रतिहताः खलु ते त्रिदशपरिपन्थिनो हताशा दानवाः ।

**उर्वशी**—( चक्षुषी उन्मील्य ) किं प्रभावदर्शिना महेन्द्रेणाभ्युपपन्नास्मि ?

**चित्रलेखा**—न महेन्द्रेण । महेन्द्रसदृशानुभावेन अनेन राजर्षिणा पुरूरवसा ।

**उर्वशी**—( राजानमवलोक्य आत्मगतम् ) उपकृतं खलु दानवेन्द्रसंरम्भेण ।

**राजा**—( उर्वशीं विलोक्य आत्मगतम् ) स्थाने खलु नारायणमृषिं विलोभयन्त्यस्तदूरुसंभवामिमां विलोक्य व्रीडिताः सर्वा अप्सरस इति । अथवा नेयं तपस्विनः सृष्टिरित्यवैमि । कुतः ?

अस्याः सर्गविधौ प्रजापतिरभूच्चन्द्रो न कान्तिप्रदः
शृङ्गारैकरसः स्वयं नु मदनो मासो नु पुष्पाकरः ।
वेदाभ्यासजडः कथं नु विषयव्यावृत्तकौतूहलो
निर्मातुं प्रभवेन्मनोहरमिदं रूपं पुराणो मुनिः ॥ १० ॥

**उर्वशी**—सखि चित्रलेखे, सखीजनः कुत्र खलु भवेत् ?

**चित्रलेखा**—सखि, अभयप्रदायी महाराजो जानाति ।

**राजा**—( उर्वशीं विलोक्य ) महति विषादे वर्तते सखीजनः । पश्यतु भवती—

यदृच्छया त्वं सकृदप्यवन्ध्ययोः
पथि स्थिता सुन्दरि यस्य नेत्रयोः ।
त्वया विना सोऽपि समुत्सुको भवे-
त्सखीजनस्ते किमुतार्द्रसौहृदः ॥ ११ ॥

**उर्वशी**—( आत्मगतम् ) अमृतं खलु ते वचनम् । अथवा चन्द्रादमृतामिति किमाश्चर्यम् ? अत एव ते प्रेक्षितुं त्वरते मे हृदयम् ।

**राजा**—( हस्तेन दर्शयन् )

एताः सुतनु मुखं ते सख्यः पश्यन्ति हेमकूटगताः ।
उत्सुकनयना लोकाश्चन्द्रमिवोपप्लवान्मुक्तम् ॥ १२ ॥

( उर्वशी साभिलाषं पश्यति । )

**चित्रलेखा**—सखि, किं प्रेक्षसे ?

**उर्वशी**—ननु समदुःखगतः पीयते लोचनाभ्याम् ।

**चित्रलेखा**—( सस्मितम् ) अयि, कः ?

**उर्वशी**—ननु प्रणयिजनः ।

**रम्भा**—( सहर्षमवलोक्य ) सखि, चित्रलेखाद्वितीयां प्रियसखी-मुर्वशीं गृहीत्वा विशाखासहित इव भगवान्सोमः समुपस्थितो राजर्षिः ।

**मेनका**—( निर्वर्ण्य ) सखि, द्वे अपि नोऽत्र प्रिये उपनते । इयं प्रत्यानीता प्रियसखी, अयं चापरिक्षतशरीरो राजर्षिर्दृश्यते ।

**सहजन्या**—सखि, युक्तं भणसि दुर्जयो दानव इति ।

**राजा**—सूत, इदं तच्छैलशिखरम् । अवतारय रथम् ।

**सूतः**—यदाज्ञापयत्यायुष्मान् । ( इति तथा करोति । )

( उर्वशी रथावतारक्षोभं नाटयन्ती सत्रासं राजानमवलम्बते । )

**राजा**—( स्वगतम् ) हन्त, सफलो मे विषमावतारः ।

यदिदं रथसंक्षोभादङ्गेनाङ्गं ममायतेक्षणया
स्पृष्टं सरोमकण्टकमङ्कुरितं मनसिजेनेव ॥ १२ ॥

**उर्वशी**—सखि, किमपि परतोऽपसर ।

**चित्रलेखा**—नाहं शक्नोमि ।

**रम्भा**—अत्र प्रियकारिणं संभावयामो राजर्षिम् ।

—विक्रमोर्वशीये प्रथमोऽङ्कः

Urvashi descends from heaven to openly declare her love for King Vikrama who was already lovesmitten, and was pining for her separation.

**विदूषकः**—भोः, चिन्तितो मया दुर्लभप्रणयिजनस्य समागमोपायः ।

( राजा तूष्णीमास्ते )

**उर्वशी**—का पुनर्धन्या स्त्री या अनेन परिमृग्यमाणात्मानं विनोदयति ?

**चित्रलेखा**—ध्यानाय किं विलम्बते ?

**उर्वशी**—सखि, बिभेमि सहसा प्रभावतो विज्ञातुम् ।

**विदूषकः**—भोः, ननु भणामि चिन्तितो मया दुर्लभप्रणयिजनसमागमोपायः ।

**राजा**—वयस्य, कथ्यताम् ।

**विदूषकः**—स्वप्नसमागमकारिणीं निद्रां सेवतां भवान् । अथवा तत्रभवत्या उर्वश्याः प्रतिकृतिं चित्रफलकेऽभिलिख्यालोकयन्नात्मानं विनोदय ।

**उर्वशी**—( सहर्षम् ) हीनसत्त्व हृदय, समाश्वसिहि ।

**राजा**—तदुभयमप्यनुपपन्नम् ।

हृदयमिषुभिः कामस्यान्तःसशल्यमिदं सदा
कथमुपलभे निद्रां स्वप्ने समागमकारिणीम् ।
न च सुवदनामालेख्येऽपि प्रियामसमाप्य तां
मम नयनयोरुद्बाष्पत्वं सखे न भविष्यति ॥ १० ॥

**चित्रलेखा**—सखि, श्रुतं त्वया वचनम् ?

**उर्वशी**——श्रुतम् । न पुनः पर्याप्तं हृदयस्य ।

**विदूषकः**——एतावान्मम मतिविभवः ।

**राजा**—( सनिःश्वासम् ।)

नितान्तकठिनां रुजं मम न वेद सा मानसीं
प्रभावविदितानुरागमवमन्यते वापि माम् ।
अलब्धफलनीरसं मम विधाय तस्मिञ्जने
समागममनोरथं भवतु पञ्चबाणः कृती ॥ ११ ॥

**चित्रलेखा**——श्रुतं त्वया ?

**उर्वशी**——हा धिक्, हा धिक् । मामप्येवमवगच्छ । सखि, असमर्थास्म्यग्रतो भूत्वात्मानं दर्शयितुम् । तत्प्रभावनिर्मितेन भूर्जपत्रेण लेखं संपाद्यान्तरा क्षेप्तुमिच्छामि ।

**चित्रलेखा**——अनुमतं मे ।

( उर्वशी नाट्येनाभिलिख्य क्षिपति । )

**विदूषकः**——अविधा अविधा भोः, किं न्वेतत् ? भुजंगनिर्मोकः किं मां खादितुं निपतितः ?

**राजा**——( दृष्ट्वा ) नायं भुजंगनिर्मोकः । भूर्जपत्रगतोऽयमक्षरविन्यासः ।

**विदूषकः**——ननु खल्वदृष्टया उर्वश्या भवतः परिदेवितं श्रुत्वा भूर्जपत्रेऽनुरागसूचकान्यक्षराण्यभिलिख्य विसर्जितानि भवेयुः ।

**राजा**——नास्त्यगतिर्मनोरथानाम् । ( गृहीत्वानुवाच्य च सहर्षम् ) सखे, प्रसन्नस्ते तर्कः ।

**विदूषकः**——यदत्राभिलिखितं तच्छ्रोतुमिच्छामि ।

**उर्वशी**——साधु साधु । आर्य, नागरोऽसि ।

**राजा**—श्रूयताम् । ( इति वाचयति )

स्वामिन् संभाविता यथाहं त्वयाज्ञाता
तथा चानुरक्तस्य सुभग एवमेव तव ॥ १२ ॥
अनन्तरं च मे ललितपारिजातशयनीये
भवन्ति सुखा नन्दनवनवाता अपि शिखीव शरीरे ॥ १३ ॥

**उर्वशी**—किं नु सांप्रतं भणिष्यति ?

**चित्रलेखा**—किं नु ? भणितमेवैतेन म्लानकमलनालोपमैरङ्गैः ।

**विदूषकः**—दिष्ट्या मया खलु बुभुक्षितेन स्वस्तिवाचनिकमिव लब्धं भवतः समाश्वासनकारणम् ।

**राजा**—समाश्वासनमिति किमुच्यते ?

तुल्यानुरागपिशुनं ललितार्थबन्धं
पत्रे निवेशितमुदाहरणं प्रियायाः ।
उत्पक्ष्मलं मम सखे मदिरेक्षणाया-
स्तस्याः समागतमिवाननमाननेन ॥ १४ ॥

**उर्वशी**—अत्रावयोः समभागा मतिः ।

**राजा**—वयस्य, अङ्गुलीस्वेदेन मे लुप्यन्तेऽक्षराणि । धार्यतामयं स्वहस्ते निक्षेपः प्रियायाः ।

**विदूषकः**—( गृहीत्वा ) ततः किं तत्रभवत्युर्वशी भवतो मनोरथतरुकुसुमं दर्शयित्वा फले विसंवदिष्यति ?

**उर्वशी**—सखि, यावदुपस्थानकातरमात्मानं समवस्थापयामि, तावत्त्वमात्मानं दर्शयित्वा यन्मेऽनुमतं तद्भण ।

**चित्रलेखा**—तथा । ( इति तिरस्करिणीमपनीय राजानमुपसृत्य ) जयतु जयतु महाराजः ।

**राजा**—( संभ्रमादरगर्भम् ) स्वागतं भवत्यै। ( पार्श्वमवलोक्य ) भद्रे।

न तथा नन्दयसि मां सख्या विरहिता तया।
संगमे दृष्टपूर्वेव यमुना गङ्गया यथा १५ ॥

**चित्रलेखा**—ननु प्रथमं मेघराजिर्दृश्यते, पश्चाद्विद्युल्लता।

**विदूषकः**—( अपवार्य ) कथं नैषोर्वश्युपगता। तत्रभवत्या उर्वश्याः सहचर्यैतया भवितव्यम्।

**राजा**—एतदासनमास्यताम्।

**चित्रलेखा**—उर्वशी महाराजं शिरसा प्रणम्य विज्ञापयति।

**राजा**—किमाज्ञापयति ?

**चित्रलेखा**—मम तस्मिन्सुरारिसंभवे दुर्नये महाराज एव शरणमासीत्। सांप्रतं साहं तव दर्शनसमुत्थेनायासिना बलवद्बाध्यमाना मदनेन पुनरपि महाराजस्यानुकम्पनीया भवामि।

**राजा**—अयि सखि,

पर्युत्सुकां कथमसि प्रियदर्शनां ता-
मार्तिं न पश्यसि पुरूरवसस्तदर्थाम्।
साधारणोऽयमुभयोः प्रणयः स्मरस्य
तप्तेन तप्तमयसा घटनाय योग्यम् ॥ १६ ॥

**चित्रलेखा**—( उर्वशीमुपेत्य ) सखि, इत एहि। निभृततरं भीषणं मदनं प्रेक्ष्य प्रियतमस्य ते दूत्यास्मि संवृत्ता।

**उर्वशी**—( तिरस्करिणीमपनीय ) अयि अनवस्थिते, लघ्वेव त्वया परित्यक्तास्मि।

**चित्रलेखा**—( सस्मितम् ) एतस्मिन्मुहूर्ते ज्ञास्यामि का कां त्यक्ष्यतीति। आचारं तावत्प्रतिपद्यस्व।

**उर्वशी**—( ससाध्वसमुपसृत्य सव्रीडम् ) जयतु जयतु महाराजः ।

**राजा**—( सहर्षम् ) सुन्दरि,

मया नाम जितं यस्य त्वयायं समुदीर्यते ।
जयशब्दः सहस्राक्षादागतः पुरुषान्तरम् ॥ १७ ॥

( हस्ते गृहीत्वा आसन उपवेशयाति )

**विदूषकः**—कीदृशी स्थितिर्भवदीये राज्ये ? प्रियवयस्यो ब्राह्मणो न वन्द्यते ?

( उर्वशी सस्मितं प्रणमति । )

**विदूषकः**—स्वस्ति भवत्यै ।

**देवदूतः**—चित्रलेखे, त्वरयोर्वशीम् ।

मुनिना भरतेन यः प्रयोगो
भवतीष्वष्टरसाश्रयो निबद्धः ।
ललिताभिनयं तमद्य भर्ता
मरुतां द्रष्टुमनाः सलोकपालः ॥ १७ ॥

( सर्व आकर्णयन्ति । उर्वशी विषादं रूपयति । )

**चित्रलेखा**—श्रुतं त्वया देवदूतस्य वचनम् ? तदनुजानीहि महाराजम् ।

**उर्वशी**—( निःश्वस्य ) नास्ति मे वाग्विभवः ।

**चित्रलेखा**—महाराज, उर्वशी विज्ञापयति–परवशोऽयं जनः । महाराजेनाभ्यनुज्ञाता इच्छामि देवदेवस्यानपराद्धमात्मानं कर्तुम् ।

**राजा**—( कथं कथमपि वचनं संस्थाप्य ) नास्मि भवत्योरीश्वरनियोगप्रदर्शी किं तु स्मर्तव्यस्त्वयं जनः ।

( उर्वशी वियोगदुःखं रूपयित्वा राजानं पश्यन्ती सह सख्या निष्क्रान्ता । )

—विक्रमोर्वशीये द्वितीयोऽङ्कः ।

---

King Pururavas struck at the sudden disappearance of Urvashi falls into a temporary fit of insanity and wanders in the wilderness in search of his beloved; he makes inquiries about her whereabouts from birds, clouds, trees etc.

( ततः प्रविशत्याकाशबद्धलक्ष्यः सोन्मादो राजा । )

**राजा**—( सक्रोधम् ) आः दुरात्मन् रक्षः, तिष्ठ तिष्ठ । क मे प्रियतमामादाय गच्छसि ? ( विलोक्य ) हन्त, शैलशिखराद्गगनमुत्पत्य बाणैर्मामभिवर्षति । ( लोष्टं गृहीत्वा हन्तुं धावन् । अनन्तरं द्विपदिकया दिशोऽवलोक्य । )

हृदयाहितप्रियादुःखसरोवरे धुतपक्षः ।
बाष्पावलिगितनयनस्ताम्यति हंसयुवा ॥ ६ ॥

( विभाव्य सकरुणम् ) कथम् ?

नवजलधरः संनद्धोऽयं न दृप्तनिशाचरः
सुरधनुरिदं दूराकृष्टं न नाम शरासनम् ।
अयमपि पटुर्धारासारो न बाणपरम्परा
कनकनिकषस्निग्धा विद्युत्प्रिया मम नोर्वशी ॥ ७ ॥

( इति मूर्च्छितः पतति । पुनर्द्विपदिकयोत्थाय निःश्वस्य )

मया ज्ञातं मृगलोचनां निशाचरः कोऽपि हरति ।
यावन्नु नवतडिच्छ्यामलो धाराधरो वर्षति ॥ ८ ॥

( इति सकरुणं विचिन्त्य ) क नु खलु रम्भोरूर्गता स्यात् ?

तिष्ठेत्कोपवशात्प्रभावपिहिता दीर्घं न सा कुप्यति
स्वर्गायोत्पतिता भवेन्मयि पुनर्भावार्द्रमस्या मनः ।

तां हर्तुं विबुधद्विषोऽपि हि न मे शक्ताः पुरोवर्तिनीं
सा चात्यन्तमगोचरं नयनयोर्यातीति कोऽयं विधिः ॥ ९ ॥

( इति द्विपदिकया दिशोऽवलोक्य सास्रम् ) अये, परावृत्तभागधेयानां दुःखं दुःखानुबन्धि । कुतः ?

अयमेकपदे तया वियोगः
प्रियया चोपनतः सुदुःसहो मे ।
नववारिधरोदयादहोभि-
र्भवितव्यं च निरातपत्वरम्यैः ॥ १० ॥

( अनन्तरे चर्चरी । )

जलधर संहरैतं कोपमाज्ञप्तः
अविरलधारासारदिशामुखकान्ताः ।
ए अहं पृथ्वीं भ्रमन्यदि प्रियां प्रेक्षिष्ये
तदा यद्यत्करिष्यसि तत्तत्साहिष्ये ॥ ११ ॥

( विहस्य ) वृथा खलु मया मनसः संतापवृद्धिरुपेक्ष्यते । यदा मुनयोऽप्येवं व्याहरन्ति ' राजा कालस्य कारणम् ' इति । तत्किमहं जलधरसमयं न प्रत्यादिशामि ।

( अनन्तरे चर्चरी )

गन्धोन्मादितमधुकरगीतै-
र्वाद्यमानैः परभृततूर्यैः ।
प्रसृतपवनोद्वेल्लितपल्लवनिकरः
सुललिताविविधप्रकारैर्नृत्याति कल्पतरुः ॥ १२ ॥

( इति नाटित्वा ) अथवा न प्रत्यादिशामि यत्प्रावृषेण्यैरेव चिह्नैर्मम राजोपचारः संप्रति । कथमिव ?

विद्युल्लेखाकनकरुचिरं श्रीवितानं ममाभ्रं
व्याधूयन्ते निचुलतरुभिर्मञ्जरीचामराणि ।
घर्मच्छेदात्पटुतरगिरो बन्दिनो नीलकण्ठा
धारासारोपनयनपरा नैगमाश्चाम्बुवाहाः ॥ १३ ॥

भवतु । किमेवं परिच्छदश्लाघया यावदस्मिन्कानने प्रियामन्वेषयामि ।

( पुनश्चर्चरी पाठस्यान्ते भिन्नकः । )

दयिताराहितोऽधिकं दुःखितो
विरहानुगतः परिमन्थरः ।
गिरिकानने कुसुमोज्ज्वले
गजयूथपतिस्तथा क्षीणगतिः ॥ १४ ॥

( अनन्तरे द्विपदिकया परिक्रम्यावलोक्य च सहर्षम् ) हन्त ह
व्यवसितस्य मे संदीपनमिव संवृत्तम् । कुतः ?

आरक्तराजिभिरियं कुसुमैर्नवकन्दली सलिलगर्भैः ।
कोपादन्तर्बाष्पे स्मरयति मां लोचने तस्याः ॥ १५ ॥

इतो गतेति कथं नु मया तत्रभवती सूचयितव्या ? यतः,

पद्भ्यां स्पृशेद्वसुमतीं यदि सा सुगात्री
मेघाभिवृष्टसिकतासु वनस्थलीषु ।
पश्चान्नता गुरुनितम्बतया ततोऽस्या
दृश्येत चारुपदपङ्क्तिरलक्तकाङ्का ॥ १६ ॥

( द्विपदिकया परिक्रम्यालोक्य च सहर्षम् ) उपलब्धमुपलक्षणं तस्याः कोपनाया मार्गोऽनुमीयते ।

हृतोष्ठरागैर्नयनोदबिन्दुभि-
निर्मग्ननाभेर्निपतद्भिरङ्कितम् ।
च्युतं रुषा भिन्नगतेरसंशयं
शुकोदरश्याममिदं स्तनांशुकम् ॥ १७ ॥

भवतु। आदास्ये तावत् । ( परिक्रम्य विभाव्य च, सास्रम् ) कथं सेन्द्रगोपं नवशाद्वलमिदम् । तत्कुतोऽस्मिन्विपिने प्रियाप्रवृत्तिरवगमयितव्या ? ( विलोक्य ) अयमासारोच्छ्वसितशैलतटस्थलीपाषाणमाधिरूढः ।

आलोकयति पयोदान्प्रबलपुरोवातनर्तिताशिखण्डः ।
केकागर्भेण शिखी दूरोन्नमितेन कण्ठेन ॥ १८ ॥

( उपेत्य ) भवतु । यावदेनं पृच्छामि ।

( अनन्तरं खण्डकः । )

संप्राप्तखेदस्त्वरितं परवारणः ।
प्रियतमादर्शनलालसो गजवरो विस्मितमानसः ॥ १९ ॥

( तेन खण्डकान्ते चर्चरी । )

बर्हिण परमित्यभ्यर्थये आचक्ष्व मम ताम्
अत्रारण्ये भ्रमता यदि त्वया दृष्टा सा मम कान्ता ।
निशामय मृगाङ्कसदृशेन वदनेन हंसगतिः
अनेन चिह्नेन ज्ञास्यस्याख्यातं तव मया ॥ २० ॥

( चर्चरिकयोपविश्य, अञ्जलिं बद्ध्वा । )

नलिकण्ठ ममोत्कण्ठा वनेऽस्मिन्वानिता त्वया ।
दीर्घापाङ्गा सितापाङ्ग दृष्टा दृष्टिक्षमा भवेत् ॥ २१ ॥

( चर्चरिया विलोक्य ) कथमदत्त्वैव प्रतिवचनं नर्तितुं प्रवृत्तः । किं नु खलु हर्षकारणमस्य ? ( विचिन्त्य ) आं, ज्ञातम् ।

मृदुपवनविभिन्नो मत्प्रियाया विनाशा-
द्घनरुचिरकलापो निःसपत्नोऽस्य जातः ।
रतिविगलितबन्धे केशहस्ते सुकेश्याः
सति कुसुमसनाथे किं करोत्येष बर्ही ॥ २२ ॥

भवतु । परव्यसननिर्वृतं न पुनरेनं पृच्छामि । ( द्विपदिकया दिशोऽवलोक्य ) अये, इयमातपान्तसंधुक्षितमदा जम्बूविटपमध्यास्ते परभृता । विहगेषु पण्डितैषा जातिः । यावदेनां पृच्छामि ।

( अनन्तरे खुरकः )

विद्याधरकाननलीनो दुःखविनिर्गतबाष्पोत्पीडः ।
दूरोत्सारितहृदयानन्दः अम्बरमानेन भ्रमति गजेन्द्रः ।
परभृते मधुरप्रलापिनि कान्ते नन्दनवने स्वच्छन्दं भ्रमन्ती ।
यदि परं प्रियतमा सा मम दृष्टा तदाचक्ष्व मम परपुष्टे ।

( एतदेव नर्तित्वा वलन्तिकयोपसृत्य जानुभ्यां स्थित्वा ) भवति,

त्वां कामिनो मदनदूतिमुदाहरन्ति
मानावभङ्गनिपुणं त्वममोघमस्त्रम् ।
तामानय प्रियतमां मम वा समीपं
मां वा नयाशु कलभाषिणि यत्र कान्ता ॥ २९ ॥

( वामकेन किंचिद्वलित्वा । आकाशे । ) किमाह भवती ? कथं त्वामेवमनुरक्तं विहाय गतेति । श्रृणोतु भवती ।

कुपिता न तु कोपकारणं
सकृदप्यात्मगतं स्मराम्यहम् ।
प्रभुता रमणेषु योषितां
नहि भावस्खलितान्यपेक्षते ॥ २६ ॥

( ससंभ्रममुत्थाय अनन्तरं जानुभ्यां स्थित्वा 'कुपिता' इति पठित्वा विलोक्य च । )

कथं कथाविच्छेदकारिणी स्वकार्य एव व्यासक्ता ?

महदपि परदुःखं शीतलं सम्यगाहुः
प्रणयमगणयित्वा यन्ममापद्गतस्य ।
अधरमिव मदान्धा पातुमेषा प्रवृत्ता
फलमभिनवपाकं राजजम्बूद्रुमस्य ॥ २७ ॥

तदेवंगतेऽपि प्रियेव मे मञ्जुस्वनेति न मे कोपोऽस्याम् । सुखमास्तां भवती । साधयामस्तावत् । ( उत्थाय द्विपदिकया परिक्रम्यावलोक्य च ) अये, दक्षिणेन वनधारां प्रियाचरणनिक्षेपशंसी नूपुरशब्दः । यावदेन-मनुगच्छामि । ( परिक्रम्य )

प्रियतमाविरहक्लान्तवदनः
अविरलबाष्पजलाकुलनयनः ।
दुःसहदुःखविसंष्ठुलगमनः
प्रसृतगुरुतापदीप्ताङ्गः ।
अधिकं दूनमानसो दरीं गतः
कानने परिभ्रमति गजेन्द्रः ॥ २८ ॥

( अनन्तरं द्विपदिकया दिशोऽवलोक्य । )

प्रियकरिणीवियुक्तो गुरुशोकानलदीप्तः ।
बाष्पजलाकुललोचनः करिवरो भ्रमति समाकुलः ॥ २९ ॥

( सकरुणम् ) हा धिक् कष्टम् ।

मेघश्यामा दिशो दृष्ट्वा मानसोत्सुकचेतसा ।
कूजितं राजहंसेन नेदं नूपुरशिञ्जितम् ॥ ३० ॥

भवतु । यावदेते मानसोत्सुकाः पतत्रिणः सरसोऽस्मान्नोत्पतन्ति त
देतेभ्यः प्रियाप्रवृत्तिरवगमयितव्या । ( वलन्तिकयोपसृत्य ) अहो ज
विहङ्गमराज,

पश्चात्सरः प्रतिगमिष्यसि मानसं त्वं
पाथेयमुत्सृज बिसं ग्रहणाय भूयः ।
मां तावदुद्धर शुचो दयिताप्रवृत्त्या
स्वार्थात्सतां गुरुतरा प्रणयिक्रियैव ॥ ३१ ॥

यथोन्मुखो विलोकयति मानसोत्सुकेन मया न लक्षितेत्येवं वचनमा

( उपविश्य चर्चरी । )

रे रे हंस किं गोप्यते ?

( इति नर्तित्वा उत्थाय । )

यदि हंस गता ते नतभ्रूः
सरसो रोधसि दृष्टपथं प्रिया मे ।
मदखेलपदं कथं नु तस्याः
सकलं चोर गतं त्वया गृहीतम् ॥ ३२ ॥

( चर्चरी । )

गत्यनुसारेण मया लक्ष्यते ।

( चर्चारिकयोपसृत्याञ्जलिं बद्ध्वा )

हंस प्रयच्छ मे कान्तां गतिरस्यास्त्वया हृता ।
विभावितैकदेशेन देयं यदभियुज्यते ॥ ३३ ॥

( पुनश्चर्चरी )

कस्मात्त्वया शिक्षितमेतद्गतिलालस ।
सा परं दृष्टा जघनभरालसा ॥ ३४ ॥

( पुनश्चर्चरी। 'हंस, प्रयच्छ' इत्यादि पठित्वा द्विपदिकया निरूप्य। विहस्य।) एष स्तेनानुशासी राजेति भयादुत्पातितः। यावदन्यमवकाशमव- गाहिष्ये। (द्विपदिकया परिक्रम्यावलोक्य।) अये, प्रियासहायश्चक्र- वाकस्तिष्ठति। तावदेनं पृच्छामि।

( अनन्तरे कुटिलिका। )

मर्मररणितमनोहरे

( मल्लघट्टी। )

कुसुमिततरुवरपल्लविते।

( चर्चरी। )

दयिताविरहोन्मादितः

कानने भ्रमति गजेन्द्रः॥ ३५॥

( द्विलयान्तरे चर्चरी। )

गोरोचनाकुङ्कुमवर्ण चक्र भण माम्।
मधुवासरे क्रीडन्तीं धन्या न दृष्टा त्वया॥ ३६॥

( चर्चरिकयोपसृत्य जानुभ्यां स्थित्वा। )

रथाङ्गनामन् वियुतो रथाङ्गश्रोणिबिम्बया।
अयं त्वां पृच्छति रथी मनोरथशतैर्वृतः॥ ३७॥

कथं कः क इत्याह। मा तावत्। न खलु विदितोऽहमस्य।

सूर्याचन्द्रमसौ यस्य मातामहपितामहौ।
स्वयं वृतः पतिर्द्वाभ्यामुर्वश्या च भुवा च यः॥ ३८॥

कथं तूष्णीं स्थितः? भवतु। उपालभे तावदेनम्। ( जानुभ्यां स्थित्वा ) तद्युक्तं तावदात्मानुमानेन वर्तितुम्। कुतः?

सरसि नलिनीपत्रेणापि त्वमावृतविग्रहां
ननु सहचरीं दूरे मत्वा विरौषि समुत्सुकः।

इति च भवतो जायास्नेहात्पृथक्स्थितिभीरुता
मयि च विधुरे भावः कान्ताप्रवृत्तिपराङ्मुखः ॥ ३९ ॥

( उपविश्य ) सर्वथा मदीयानां भाग्यविपर्ययाणामयं प्रभावः यावदन्यमवकाशमवगाहिष्ये । ( द्विपदिकया परिक्रम्यावलोक्य च । ) अये,

इदं रुणाद्धि मां पद्ममन्तःक्वणितषट्पदम् ।
मया दष्टाधरं तस्याः ससीत्कारमिवाननन् ॥ ४० ॥

इतोगतस्यानुशयो मा भूदित्यस्मिन्नपि कमलसेविनि भ्रमरे प्रणयित्वं करिष्ये ।

मधुकर मदिराक्ष्याः शंस तस्याः प्रवृत्तिं
वरतनुरथवासौ नैव दृष्टा त्वया मे ।
यदि सुरभिमवाप्स्यस्तन्मुखोच्छ्वासगन्धं
तव रतिरभविष्यत्पुण्डरीके किमस्मिन् ॥ ४२ ॥

( इति द्विपदिकया परिक्रम्यावलोक्य च । ) अये, करिणिसहायो नागाधिराजो नीपस्कन्धनिषण्णहस्तस्तिष्ठति । यावदेनं गच्छामि ।

( कुलिका । )

करिणीविरहसंतापितः ।

( मन्दघटी । )

कानने गन्धोद्धतमधुकरः ॥ ४३ ॥

( अतोऽन्तरे विलोक्य । ) अथवा न तावदयमुपसर्पणकालः ।

अयमचिरोद्गतपल्लवमुपनीतं प्रियतमाग्रहस्तेन ।
अभिलेढु तावदासवसुरभिरसं शल्लकीभङ्गम् ॥ ४४ ॥

( स्थानकेनावलोक्य । ) अये, कृताह्निकः संवृत्तः । भवतु । समीपमस्य गत्वा पृच्छामि ।

( अनन्तरे चर्चरी । )

अहं त्वां पृच्छामि आचक्ष्व गजवर
ललितप्रहारेण नाशिततरुवर ।
दूरविनिर्जितशशधरकान्ति-
र्दृष्टा प्रिया त्वया संमुखं यान्ती ॥ ४५ ॥

( पदद्वयं पुरत उपसृत्य । )

मदकल युवतिशशिकला गजयूथप यूथिकाशबलकेशी ।
स्थिरयौवना स्थिता ते दूरालोके सुखालोका ॥ ४६ ॥

( सहर्षमाकर्ण्य । ) अहह, अनेन प्रियोपलब्धिशंसिना मन्द्रकण्ठगर्जितेन समाश्वसितोऽस्मि । साधर्म्याद्भूयसी मे त्वयि प्रीतिः ।

मामाहुः पृथिवीभृतामधिपतिं नागाधिराजो भवा-
नव्युच्छिन्नपृथुप्रवृत्ति भवतो दानं ममाप्यर्थिषु ।
स्त्रीरत्नेषु ममोर्वशी प्रियतमा यूथे तवेयं वशा
सर्वं मामनु ते प्रियाविरहजां त्वं तु व्यथां मानुभूः ॥ ४७ ॥

सुखमास्तां भवान् ( द्विपदिकया परिक्रम्यावलोक्य च । ) अये, अयमसौ सुरभिकंदरो नाम विशेषरमणीयः सानुमान् । प्रियश्चायमप्सरसाम् । अपि नाम सुतनुरस्योपत्यकायामुपलभ्येत । ( परिक्रम्यावलोक्य, च । ) कथमन्धकारः । भवतु विद्युत्प्रकाशेनावलोकयामि । कथं मदीयैर्दुरितपरिणामैर्मेघोदयोऽपि शतह्रदाशून्यः संवृत्तः । तथापि शिलोच्चयमेनमपृष्ट्वा न निवर्तिष्ये ।

( अनन्तरे खण्डकः । )

प्रसृतखरखुरदारितमेदिनिर्वनगहनेऽविचलः ।
परिसर्पति पश्यत लीनो निजकार्योद्युक्तः कोलः ॥ ४८ ॥

अपि वनान्तरमल्पकुचान्तरा
श्रयति पर्वत पर्वसु संनता ।
इदमनङ्गपरिग्रहमङ्गना
पृथुनितम्ब नितम्बवती तव ॥ ४९ ॥

कथ तूष्णीमेवास्ते । शङ्के विप्रकर्षान्न शृणोति । भवतु । समीपमस्य
गत्वा पृच्छामि ।

( अनन्तरे चर्चरी । )

स्फटिकशिलातलनिर्मलनिर्झर
बहुविधकुसुमविरचितशेखर ।
किंनरमधुरोद्गीतमनोहर
दर्शय मम प्रियतमां महीधर ॥ ५० ॥

( चर्चरिकयोपसृत्याञ्जलिं बद्ध्वा । )

सर्वक्षितिभृतां नाथ दृष्टा सर्वाङ्गसुन्दरी ।
रामा रम्ये वनान्तेऽस्मिन्मया विरहिता त्वया ॥ ५१ ॥

( तथैव प्रतिशब्दं शृणोति । आकर्ण्य सहर्षम् । ) कथं यथाक्रमं दृष्टेत्याह
भवतु । अवलोकयामि । ( दिशोऽवलोक्य सखेदम् । ) अयं ममैवाय
कंदरान्तरविसर्पी प्रतिशब्दः । ( इति मूर्च्छति । ) ( उत्थायोपविश्
सविषादम् । ) अहह, श्रान्तोऽस्मि । यावदस्या गिरिनद्यास्तीरे तर
ङ्गवातमासेविष्ये । ( द्विपदिकया परिक्रम्यावलोक्य च । ) इमां नवाम्बु
कलुषां स्रोतोवहां पश्यता मया रतिरुपलभ्यते । कुतः ?

तरङ्गभ्रूभङ्गा क्षुभितविहगश्रेणिरशना
विकर्षन्ती फेनं वसनमिव संरम्भशिथिलम् ।

यथाविद्धं याति स्खलितमभिसंधाय बहुशो
नदीभावेनेयं ध्रुवमसहना सा परिणता ॥ ९२ ॥

भवतु । प्रसादयामि तावदेनाम् ।

( अनन्तरे कुटिलिका । )

प्रसीद प्रियतमे सुन्दरि एनया
क्षुभिताकरुणविहङ्गमके नत्या ।
सुरसरित्तीरसमुत्सुकैणके
अलिकुलझंकारिते नदि ॥ ९३ ॥

( तेन कुटिलिकान्तरे चर्चरी । )

पूर्वदिक्पवनाहतकल्लोलोद्धतबाहु-
र्मेघाङ्गैर्नृत्यति सललितं जलनिधिनाथः ।
हंसरथाङ्गशङ्खकुङ्कुमकृताभरणः
कारिमकराकुलकृष्णकमलकृतावरणः ।
वेलासलिलोद्वेल्लितहस्तदत्तताली-
ऽवस्तृणाति दशदिशो रुद्ध्वा नवमेघकालः ॥ ९४ ॥

( चर्चरीकयोपसृत्य जानुभ्यां स्थित्वा । )

त्वयि निबद्धरतेः प्रियवादिनः
प्रणयभङ्गपराङ्मुखचेतसः ।
कमपराधलवं मम पश्यसि
त्यजसि मानिनि दासजनं यतः ॥ ९५ ॥

कथं तूष्णीमेवास्ते । अथवा परमार्थतः सरिदियं नोर्वशी । अन्यथ
कथं पुरूरवसमपहाय समुद्राभिसारिणी भवेत् । अनिर्वेदप्राप्याणि
श्रेयांसि । भवतु । तमेवोद्देशं गच्छामि, यत्र मे नयनयोः स

सुनयना तिरोहिता । ( परिक्रम्यावलोक्य च ) इमं तावत्प्रियाप्रवृत्तये सारङ्गमासीनमभ्यर्थये ।

अभिनवकुसुमस्तबकिततरुवरस्य परिसरे
मदकलकोकिलकूजितमधुपझंकारमनोहरे ।
नन्दनविपिने निजकरिणीविरहानलेन संततो
विचरति गजाधिपतिरैरावतनामा ॥ ९६ ॥

( गलितकः । जानुभ्यां स्थित्वा । )

कृष्णसारच्छविर्योऽयं दृश्यते काननश्रिया ।
वनशोभावलोकाय कटाक्ष इव पातितः ॥ ९७ ॥

( चर्चरी । )

सुरसुन्दरी जघनभरालसा पीनोत्तुङ्गघनस्तनी
स्थिरयौवना तनुशरीरा हंसगतिः ।
गगनोज्ज्वलकानने मृगलोचना भ्रमन्ती
दृष्टा त्वया तद्विरहसमुद्रान्तरादुत्तारय माम् ॥ ९८ ॥

( उपसृत्याञ्जलिं बद्ध्वा ) हंहो हरिणीपते,

अपि दृष्टवानसि मम प्रियां वने
कथयामि ते तदुपलक्षणं शृणु ।
पृथुलोचना सहचरी यथैव ते
सुभगं तथैव खलु सापि वीक्षते ॥ ९९ ॥

कथमनादृत्य मद्वचनं कलत्राभिमुखं स्थितः । सर्वथोपपद्यते—परिभवास्पदं दशाविपर्ययः । यावदन्यमवकाशमवगाहिष्ये । ( परिक्रम्यावलोक्य च । ) हन्त, दृष्टमुपलक्षणं तस्या मार्गस्य ।

रक्तकदम्बः सोऽयं प्रियया घर्मान्तशंसि यस्येदम् ।
कुसुममसमग्रकेसरविषममपि कृतं शिखाभरणम् ॥ ६० ॥

किं न खलु शिलाभेदगतं नितान्तरक्तमिदमवलोक्यते ।

प्रभालेपी नायं हरिहतगजस्यामिषलवः
स्फुलिङ्गः स्यादग्नेर्गहनमभिवृष्टं पुनरिदम् ।
अरे रक्ताशोकस्तबकसमरागो मणिरयं
यमुद्धर्तुं पूषा व्यवसित इवालम्बितकरः ॥ ६१ ॥

तु ) आदास्ये तावत् । ( ग्रहणं नाटयति ।)

प्रणयिनीबद्धास्वादो बाष्पाकुलनिजनयनः ।
गजपतिर्गहने दुःखितः परिभ्रमति क्षामितवदनः ॥ ६२ ॥

( द्विपदिकयोपसृत्य गृहीत्वात्मगतम् । )

मन्दारपुष्पैरधिवासितायां
यस्याः शिखायामयमर्पणीयः ।
सैव प्रिया संप्रति दुर्लभा मे
मैवैनमश्रूपहतं करोमि ॥ ६३ ॥

( इत्युत्सृजति । )

( नेपथ्ये । )

वत्स, गृह्यतां गृह्यताम् ।

संगमनीयो मणिरिह शैलसुताचरणरागयोनिरयम् ।
आवहति धार्यमाणः संगममाशु प्रियजनेन ॥ ६४ ॥

**राजा**—( ऊर्ध्वमवलोक्य । ) को मामनुशास्ति । ( विलोक्य । )
भगवान्मृगराजधारी । भगवन्, अनुगृहीतोऽहममुनोपदेशेन
मणिमादाय । ) हंहो संगममणे,

को नामोष्णोदकेन नवमालिकां सिञ्चति ।

दिष्ट्या धूमावरुद्धदृष्टेरपि यजमानस्य पावक एवाहुतिः पतिता ।

न खलु धीमतां कश्चिदविषयो नाम ।

अतिस्नेहः पापशङ्की ।

अविश्रमोऽयं लोकतन्त्राधिकारः ।

सर्वः प्रार्थितमर्थमधिगम्य सुखी संपद्यते जन्तुः ।

अनिर्वर्णनीयं परकलत्रम् ।

प्रत्युत्पन्नमति स्त्रैणम् ।

आत्मकृतं चापलमप्रतिहतं दहति ।

नन्ववसरोपसर्पणीया राजानः ।

एष नामानुगृहीतः यः शूलादवतार्य हस्तिस्कन्धे प्रतिष्ठापितः ।

उत्सवप्रियाः खलु मानुषाः ।

अहो सर्वास्ववस्थासु रमणीयत्वमाकृतिविशेषाणाम् ।

रन्ध्रोपनिपातिनोऽनर्थाः ।

भवितव्यता खलु बलवती ।

न कदापि सत्पुरुषाः शोकपात्रात्मानो भवन्ति ।

ननु प्रवातेऽपि निष्कम्पा गिरयः ।

कः पतिदेवतामन्यः परामर्ष्टुमुत्सहते ।

न खलु मातापितरौ भर्तृवियोगदुःखितां दुहितरं द्रष्टुं पारयतः ।

अवश्यंभाविनोऽचिन्तनीयः समागमो भवति ।

एषोऽत्रभवान्नदीमतिक्रम्य मृगतृष्णिकायां संक्रान्तः ।

सति खलु दीपे व्यवधानदोषेणैषोऽन्धकारमनुभवति ।

उत्सर्पिणी खलु महतां प्रार्थना ।

अन्याय्यः परदाराणां व्यवहारः ।

---

# विक्रमोर्वशीयम् ।

अहो नु खलु दुर्लभाभिनिवेशी मदनः ।

अतिस्नेहः खलु कार्यदर्शी ।

नास्त्यगतिर्मनोरथानाम् ।

ननु प्रथमं मेघराजिर्दृश्यते, पश्चाद्विद्युल्लता ।

सर्वत्र प्रमादी वैधेयः ।

लोप्त्रेण गृहीतस्य कुम्भीलकस्यास्ति वा प्रतिवचनम् ।

न खल्वक्षिदुःखितोऽभिमुखे दीपशिखां सहते ।

भवितव्यतानुविधायीनि बुद्धीन्द्रियाणि ।

सर्वत्रौदरिकस्याभ्यवहार्यमेव विषयः ।

शक्यमाशाबन्धेनात्मानं धारयितुम् ।

अन्यसंक्रान्तप्रेमाणो नागरका अधिकं दक्षिणा भवन्ति ।

न युक्तं सुभाषितं प्रत्याचरितुम् ।

छिन्नबन्धे मत्स्ये पलायिते निर्विण्णो धीवरो भणति, धर्मो भविष्यतीति ।

दूरारूढः खलु प्रणयोऽसहनः ।

नास्ति विधेरलङ्घनीयम् ।

अये परावृत्तभागधेयानां दुःखं दुःखानुबन्धि ।

परिभवास्पदं दशाविपर्ययः ।

को देवतारहस्यानि तर्कयिष्यति ।

वसुधाधरकन्दराभिसर्पी
प्रतिशब्दोऽपि हरेर्भिनत्ति नागान् ॥ १. १९ ॥

यदेवोपनतं दुःखात्सुखं तद्रसवत्तरम् ।
निर्वाणाय तरुच्छाया तप्तस्य हि विशेषतः ॥ ३. २१ ॥
स्वार्थात्सतां गुरुतरा प्रणयिक्रियैव ॥ ४. १९ ॥
विभावितैकदेशेन स्तेयं यदभियुज्यते ॥ ४. १७ ॥

---

# मालविकाग्निमित्रम् ।

नन्वाकृतिविशेषेष्वादरः पदं करोति ।

कामं खलु सर्वस्य कुलविद्या बहुमता ।

पत्तने सति ग्रामे रत्नपरीक्षा ।

अन्योन्यकलहितयोर्मत्तहस्तिनोरेकतरस्मिन्ननिर्जिते कुत उपशमः ।

विनेतुरद्रव्यपरिग्रहोऽपि बुद्धिलाघवं प्रकाशयति ।

अपरिनिष्ठितस्योपदेशस्यान्याय्यं प्रदर्शनम् ।

सर्वज्ञस्याप्येकाकिनो निर्णयाभ्युपगमो दोषाय ।

सुशिक्षितोऽपि न सर्व उपदेशदर्शने निपुणो भवति ।

उपस्थितं नयनमधु संनिहितमक्षिकं च ।

अहो सर्वास्ववस्थास्वनवद्यता रूपस्य ।

अहो सर्वास्ववस्थासु चारुता शोभान्तरं पुष्यति ।

मया नाम शुष्कघनगर्जितेऽन्तरिक्षे जलपानमिच्छता चातकायितम् ।

पण्डितपरितोषप्रत्यया ननु मूढा जातिः ।

साधु । त्वं दरिद्र आतुर इव वैद्येनोपनीयमानमौषधमिच्छसि ।

उचितवेलातिक्रमे चिकित्सका दोषमुदाहरन्ति ।

निसर्गनिपुणाः स्त्रियः ।

न हि कमलिनीं दृष्ट्वा ग्राहमवेक्षते मतङ्गजः ।

मदः किल स्त्रीजनस्य सविशेषं मण्डनम् ।

चूताङ्कुरं विचिन्वत्योरावयोः पिपीलिकाभिर्दष्टम् ।

अनुरागोऽनुरागेण परीक्षितव्यः ।

भ्रमरसंबाध इति वसन्तावतारसर्वस्वभूतः किं न चूतप्रसवो वतंसनीयः ।

न शोभते प्रणयिजने निरपेक्षता ।

अविषोऽपि कदाचिद्दंशो भवेत् ।

कुतूहलवानपि निसर्गशालीनः स्त्रीजनः ।

रमणीयः खलु नवाङ्गनानां मदनाविषयावतारः ।

किं नु खलु दर्दुरा व्याहरन्तीति देवः पृथिवीं वर्षितुं स्मरति

बन्धनस्थितो गृहकपोतको बिडालिकालोके पतितः ।

आगामि सुखं वा दुःखं वा हृदयं समर्थीकरोति ।

चन्दनं खलु मया पादुकापरिभोगेण दूषितम् ।

अहो परिभवोपहारिणो विनिपाताः ।

सर्वोऽपि नववरो लज्जातुरो भवति ।

पुराणमित्येव न साधु सर्वं
न चापि काव्यं नवमित्यवद्यम् ।
सन्तः परीक्ष्यान्यतरद्भजन्ते
मूढः परप्रत्ययनेयबुद्धिः ॥ १. २ ॥

पात्रविशेषन्यस्तं गुणान्तरं व्रजति शिल्पमाधातुः ।
जलमिव समुद्रशुक्तौ मुक्ताफलतां पयोदस्य ॥ १. ६ ॥

अर्थं सप्रतिबन्धं प्रभुरधिगन्तुं सहायवानेव ।
दृश्यं तमसि न पश्यति दीपेन विना सचक्षुरपि ॥ १. ९ ॥

लब्धास्पदोऽस्मीति विवादभीरो-
स्तितिक्षमाणस्य परेण निन्दाम् ।
यस्यागमः केवलजीविकायै
तं ज्ञानपण्यं वणिजं वदन्ति ॥ १. १७ ॥

प्रायः समानविद्याः परस्परयशःपुरोभागाः ॥ १. २० ॥

मन्दोऽप्यमन्दतामेति संसर्गेण विपश्चितः ।
पङ्कच्छिदः फलस्येव निकषेणाविलं पयः ॥ २. ७ ॥

उपदेशं विदुः शुद्धं सन्तस्तमुपदेशिनः ।
श्यामायते न युष्मासु यः काञ्चनमिवाग्निषु ॥ २. ९ ॥

स्थाने प्राणाः कामिनां दूत्यधीनाः ॥ ३. १४ ॥

न हि बुद्धिगुणेनैव सुहृदामर्थदर्शनम् ।
कार्यसिद्धिपथः सूक्ष्मः स्नेहेनाप्युपलक्ष्यते ॥ ४. ६ ॥

प्रतिपक्षेणापि पतिं
सेवन्ते भर्तृवत्सलाः साध्व्यः ।
अन्यसरितां शतानि हि
समुद्रगाः प्रापयन्त्यब्धिम् ॥ ५. १९ ॥

# रघुवंशः ।

हेम्नः संलक्ष्यते ह्यग्नौ विशुद्धिः श्यामिकापि वा ॥ १. १०

सहस्रगुणमुत्स्रष्टुमादत्ते हि रसं रविः ॥ १. १८ ॥

संततिः शुद्धवंश्या हि परत्रेह च शर्मणे ॥ १. ६९ ॥

प्रतिबध्नाति हि श्रेयः पूज्यपूजाव्यतिक्रमः ॥ १. ७९ ॥

भक्त्योपपन्नेषु हि तद्विधानां
प्रसादचिह्नानि पुरःफलानि ॥ २. २२ ॥

न पादपोन्मूलनशक्ति रंहः
शिलोच्चये मूर्च्छति मारुतस्य ॥ २. ३४ ॥

अल्पस्य हेतोर्बहु हातुमिच्छ-
न्विचारमूढः प्रतिभासि मे त्वम् ॥ २. ४७ ॥

पथः श्रुतेर्दर्शयितार ईश्वरा
मलीमसामाददते न पद्धतिम् ॥ ३. ४६ ॥

पदं हि सर्वत्र गुणैर्निधीयते ॥ ३. ६२ ॥

प्रणिपातप्रतीकारः संरम्भो हि महात्मनाम् ॥ ४. ६४ ॥

आदानं हि विसर्गाय सतां वारिमुचामिव ॥ ४. ८६ ॥

सूर्ये तपत्यावरणाय दृष्टेः
कल्पेत लोकस्य कथं तमिस्रा ॥ ५. १३ ॥

पर्यायपीतस्य सुरैर्हिमांशोः
कलाक्षयः श्लाघ्यतरो हि वृद्धेः ॥ ५. १६ ॥

......................निर्गलिताम्बुगर्भं
शरद्घनं नार्दति चातकोऽपि ॥ ५. १७ ॥

......................भिन्नरुचिर्हि लोकः ॥ ६. ३० ॥

न हि प्रफुल्लं सहकारमेत्य
वृक्षान्तरं काङ्क्षति षट्पदालिः ॥ ६. ६९ ॥
रत्नं समागच्छतु काञ्चनेन ॥ ६. ७९ ॥
मनो हि जन्मान्तरसंगतिज्ञम् ॥ ७. १५ ॥
धूमो निवर्त्येत समीरणेन
यतस्तुकक्षस्तत एव वह्निः ॥ ७. ५५ ॥
प्रतिकारविधानमायुषः
सति शेषे हि फलाय कल्पते ॥ ८. ४० ॥
अभितप्तमयोऽपि मार्दवं
भजते कैव कथा शरीरिषु ॥ ८. ४३ ॥
विषमप्यमृतं क्वचिद्भवे-
दमृतं वा विषमीश्वरेच्छया ॥ ८. ४६ ॥
परलोकजुषां स्वकर्मभि-
र्गतयो भिन्नपथा हि देहिनाम् ॥ ८. ८५ ॥
मरणं प्रकृतिः शरीरिणां
विकृतिर्जीवितमुच्यते बुधैः ।
क्षणमप्यवतिष्ठते श्वस-
न्यदि जन्तुर्ननु लाभवानसौ ॥ ८. ८७ ॥
द्रुमसानुमतां किमन्तरं
यदि वायौ द्वितयेऽपि ते चलाः ॥ ८. ९० ॥
अपथे पदमर्पयन्ति हि
श्रुतवन्तोऽपि रजोनिमीलिताः ॥ ९. ७४ ॥
कृष्यां दहन्नपि खलु क्षितिमिन्धनेद्धो
बीजप्ररोहजननीं ज्वलनः करोति ॥ ९. ८० ॥

अल्पाक्षेपो भविष्यन्त्याः कार्यसिद्धेर्हि लक्षणम् ॥ १०. ६ ॥
तेजसां हि न वयः समीक्ष्यते ॥ ११. १ ॥
पावकस्य महिमा स गण्यते
कक्षवज्ज्वलति सागरेऽपि यः ॥ ११. ७५ ॥
खातमूलमनिलो नदीरयैः
पातयत्यपि मृदुस्तटद्रुमम् ॥ ११. ७६ ॥
निर्जितेषु तरसा तरस्विनां
शत्रुषु प्रणतिरेव कीर्तये ॥ ११. ८९ ॥
अत्यारूढो हि नारीणामकालज्ञो मनोभवः ॥ १२ ३३ ॥
काले खलु समारब्धाः फलं बध्नन्ति नीतयः ॥ १२. ६९ ॥
अपि स्वदेहात्किमुतेन्द्रियार्था-
द्यशोधानानां हि यशो गरीयः ॥ १४. ३५ ॥
छाया हि भूमेः शशिनो मलत्वे-
नारोपिता शुद्धिमतः प्रजाभिः ॥ १४. ४० ॥
आज्ञा गुरूणां ह्यविचारणीया ॥ १४. ४३ ॥
त्राणाभावे हि शापास्त्राः कुर्वन्ति तपसो व्ययम् ॥ १५. ३ ॥
धर्मसंरक्षणार्थैव प्रवृत्तिर्भुवि शार्ङ्गिणः ॥ १५. १४ ॥
वयोरूपविभूतीनामेकैकं मदकारणम् ॥ १७. ४३ ॥
न हि सिंहो गजास्कन्दी भयाद्गिरिगुहाशयः ॥ १७. ५२ ॥
अम्बुगर्भो हि जीमूतश्चातकैरभिनन्द्यते ॥ १७. ६० ॥
स्वादुभिस्तु विषयैर्हृतस्ततो
दुःखमिन्द्रियगणो निवार्यते ॥ १९. ४९ ॥

## कुमारसंभवः ।

एको हि दोषो गुणसंनिपाते
निमज्जतीन्दोः किरणेष्विवाङ्कः ॥ १. ३ ॥

क्षुद्रेऽपि नूनं शरणं प्रपन्ने
ममत्वमुच्चैः शिरसां सतीव ॥ १. १२ ॥

अभ्यर्थनाभङ्गभयेन साधु
र्माध्यस्थ्यमिष्टेऽप्यवलम्बतेऽर्थे ॥ १. ५२ ॥

विकारहेतौ सति विक्रियन्ते
येषां न चेतांसि त एव धीराः ॥ १.५९ ॥

शाम्येत्प्रत्यपकारेण नोपकारेण दुर्जनः ॥ २. ४० ॥

प्रयोजनापेक्षितया प्रभूणां
प्रायश्चलं गौरवमाश्रितेषु ॥ ३. १ ॥

अप्यप्रसिद्धं यशसे हि पुंसा-
मनन्यसाधारणमेव कर्म ॥ ३. १९ ॥

प्रायेण सामग्र्यविधौ गुणानां
पराङ्मुखी विश्वसृजः प्रवृत्तिः ॥ ३. २८ ॥

आत्मेश्वराणां न हि जातु विघ्नाः
समाधिभङ्गप्रभवो भवन्ति ॥ ३. ४० ॥

न हीश्वरव्याहृतयः कदाचि-
त्पुष्णन्ति लोके विपरीतमर्थम् ॥ ३. ६३ ॥

स्वजनस्य हि दुःखमग्रतो
विवृतद्वारमिवोपजायते ॥ ४. २६ ॥

दयितास्वनवस्थितं नृणां
न खलु प्रेम चलं सुहृज्जने ॥ ४. २८ ॥
प्रियेषु सौभाग्यफला हि चारुता ॥ ५. १ ॥
क ईप्सितार्थस्थिरनिश्चयं मनः
पयश्च निम्नाभिमुखं प्रतीपयेत् ॥ ५. ५ ॥
न षट्पदश्रेणिभिरेव पङ्कजं
सशैवलासङ्गमपि प्रकाशते ॥ ५. ९ ॥
न धर्मवृद्धेषु वयः समीक्ष्यते ॥ ५. १६ ॥
भवन्ति साम्येऽपि निविष्टचेतसां
वपुर्विशेषेष्वतिगौरवाः क्रियाः ॥ ५. ३१ ॥
शरीरमाद्यं खलु धर्मसाधनम् ॥ ५. ३३ ॥
न रत्नमन्विष्यति मृग्यते हि तत् ॥ ५. ४५ ॥
मनोरथानामगतिर्न विद्यते ॥ ५. ६४ ॥
अपेक्ष्यते साधुजनेन वैदिकी
श्मशानशूलस्य न यूपसत्क्रिया ॥ ५ ७३ ॥
अलोकसामान्यमचिन्त्यहेतुकं
द्विषन्ति मन्दाश्चरितं महात्मनाम् ॥ ५. ७५ ॥
न कामवृत्तिर्वचनीयमीक्षते ॥ ५. ८२ ॥
न केवलं यो महतोऽपभाषते
शृणोति तस्मादपि यः स पापभाक् ॥ ५. ८३ ॥
क्लेशः फलेन हि पुनर्नवतां विधत्ते ॥ ५. ८६ ॥
स्त्री पुमानित्यनास्थैषा वृत्तं हि महितं सताम् ॥ ६. १२

क्रियाणां खलु धर्म्याणां सत्पत्न्यो मूलकारणम् ॥ ६. १३ ॥

प्रायः प्रत्ययमाधत्ते स्वगुणेषूत्तमादरः ॥ ६. २० ॥

विक्रियायै न कल्पन्ते संबन्धाः सदनुष्ठिताः ॥ ६. २९ ॥

यदध्यासितमर्हद्भिस्तद्धि तीर्थं प्रचक्षते ॥ ६. ५६ ॥

विनियोगप्रसादा हि किंकराः प्रभविष्णुषु ॥ ६. ६२ ॥

अशोच्या हि पितुः कन्या सद्भर्तृप्रतिपादिता ॥ ६. ७९ ॥

प्रायेण गृहिणीनेत्राः कन्यार्थेषु कुटुम्बिनः ॥ ६. ८५ ॥

भवन्त्यव्यभिचारिण्यो भर्तुरिष्टे पतिव्रताः ॥ ६. ८६ ॥

स्त्रीणां प्रियालोकफलो हि वेषः ॥ ७. २२ ॥

कालप्रयुक्ता खलु कार्यविद्भि-
र्विज्ञापना भर्तृषु सिद्धिमेति ॥ ७. ९३ ॥

विक्रिया न खलु कालदोषजा
निर्मलप्रकृतिषु स्थिरोदया ॥ ८. ६५ ॥

नूनमात्मसदृशी प्रकल्पिता
वेधसैव गुणदोषयोर्गतिः ॥ ८. ६६ ॥

कार्येष्ववश्यकार्येषु सिद्धये क्षिप्रकारिता ॥ १०. २५ ॥

मुदे न हृद्या किमु बालकेलिः ॥ ११. ४० ॥

प्रभुप्रसादो हि मुदे न कस्य ॥ १२. ३२ ॥

भवन्ति वाचोऽवसरे प्रयुक्ता
ध्रुवं फलाविष्टमहोदयाय ॥ १२. ४३ ॥

न कस्य वीर्याय वरस्य संगतिः ॥ १९. ५१ ॥

# मेघदूतम् ।

याञ्चा मोघा वरमधिगुणे नाधमे लब्धकामा ॥ ६ ॥

आशाबन्धः कुसुमसदृशं प्रायशो ह्यङ्गनानां
सद्यःपाति प्रणयि हृदयं विप्रयोगे रुणद्धि ॥ १० ॥

न क्षुद्रोऽपि प्रथमसुकृतापेक्षया संश्रयाय
प्राप्ते मित्रे भवति विमुखः किं पुनर्यस्तथोच्चैः ॥ १७ ॥

रिक्तः सर्वो भवति हि लघुः पूर्णता गौरवाय ॥ २० ॥

स्त्रीणामाद्यं प्रणयवचनं विभ्रमो हि प्रियेषु ॥ २८ ॥

मन्दायन्ते न खलु सुहृदामभ्युपेतार्थकृत्याः ॥ ३८ ॥

आपन्नार्तिप्रशमनफलाः संपदो ह्युत्तमानाम् ॥ ५३ ॥

के वा न स्युः परिभवपदं निष्फलारम्भयत्नाः ॥ ५४ ॥

संकल्पन्ते स्थिरगणपदप्राप्तये श्रद्दधानाः ॥ ५५ ॥

सूर्यापाये न खलु कमलं पुष्यति स्वामभिख्याम् ॥ १७ ॥

प्रायः सर्वो भवति करुणावृत्तिरार्द्रान्तरात्मा ॥ ३० ॥

नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेण ॥ ४६ ॥

स्नेहानाहुः किमपि विरहे ध्वंसिनस्ते त्वयोगा–
दिष्टे वस्तुन्युपचितरसाः प्रेमराशीभवन्ति ॥ ४९ ॥

# APPENDIX A.

The following is a summary of the Pratyabhijna philosophy of Kashmir, as given by Pandit Lachhmidhar Kalla in his lectures on the "Birthplace" of Kalidas.

According to the Pratyabhijna philosophy, there is only one existence,[a] self or 'Sadā Siva', which may be described as having two aspects, transcendent and immanent, or Siva and Sakti, which are one in their essence, and are but two aspects of the same reality.[b] They are eternally related together like word and its meaning.[c] Sakti works in a variety of modes and has every hold on Siva. Indeed Sakti is Siva himself.[d] With his Sakti thus Siva manifests himself as the universe and he does this out of his free-will, without use of any other material: Universe is expansion out of the perfect freedom of God.[e] The process of manifestation is technically known as the Ābhās or reflection of Sakti[f] on Siva as distinguished from the 'Vivarta' doctrine of the vedantins.[g] According to the Vivarta doctrine, the appearances are not real as they are non-existent in the supreme reality; while according to the 'Ābhās doctrine, the appearances are real in the sense that they are aspects of ultimate reality or परमशिव in whom they exist in the highly synthesized form as the experienced. The Ābhās and the the Vivarta doctrines both try to explain the phenomenon of diversity in unity but to the 'Vivarta' this apparent division is of no consequence while to the 'Ābhās' it is apparently a source of strengthening to the whole.

Thus Siva who in his supreme freedom and joy wills to create this universe, brings into operation his Sakti, which acts as the principle of Negation of the subjective idea, and brings out the objective reality, the 'Srishti'.[h] By the necessity of his own creative power, Siva who is all along perfect freedom and light also limits himself as the individual soul or 'Jiva'— Siva *forgets* his own Sakti in the Jiva-State which is the result of his own free-will to create.[i] The creative Sakti acts as force of obscuration in order to create many out of the one. This aspect of the Sakti is technically known as तिरोधान or पिधान or Maya not in its vedantic sense as mere illusion but the *activity* which produces forgetfulness of the real nature of self.[j] In other words विस्मृति takes place on part of Siva of his own Sakti: or the reflection of Sakti on Siva is bedimmed. But the force of obscuration cannot be of a permanent character, it is only a temporary phase, though a neccessary one, in the course of evolution. It vanishes when the course of involution begins, or technically speaking when the अनुग्रह aspect of Sakti reacts upon it.[k] Realization of Sakti as belonging to self takes place through the method of recognition, or in other words, realization of the identity of self with God takes place through *recognition* of the Divine nature of self. *Recognition* is the only way to self-realization.[l] Recognition or प्रत्यभिज्ञान takes place by some potent means such as that of the instruction of the Guroo or the study of the अध्यात्मदर्शन—the power of contemplation on self or once own *Pratyaya*: thus recognition ends in self-realization.[m] Sakti is reflected in the pure light of Siva, or in other words, Siva regains his Sakti. Self-realization takes place or union by recognition is attained. The experience thus gained is not lost

but is "synthetically" related to the divine experiencer. *Union* by *recognition* or the प्रत्यभिज्ञान is thus the chief essence of this system of philosophy. *

After gainig recognition what is left for one is to do good to others for "there is no divine curse on man that he should only be actuated by personal motives." The Pratyabhijna doctrine is preached for the good of mankind irrespective of caste, colour, creed or sex. The student should approach this philosophy as 'Dāsa' to whom it will be given free out of its abundance. *

# APPENDIX B.

# KALIDASA AND MUSIC.

BY

SARDAR G. N. MUJUMDAR, POONA.

Much has been said about Kālidāsa by both Western and Eastern scholars with regard to the different aspects of his works, such as the Alankāras, the religion, the philosophy etc. contained in his works. But no one has, as far as I know, dealt with Kālidāsa's music. This is my humble attempt to lay before this learned assembly a critical review of his seven works viz. Raghuvamsa, Kumārasambhava, Meghadūta, Rtusamhāra, Abhijnānasākuntala, Mālavikāgnimitra and Vikramorvasiya, considered from the musical point of view.

I deal with this subject in its three aspects: (A) vocal music, (B) instrumental music and (C) dancing.

## (A) VOCAL MUSIC.

1. Kālidāsa seems to have a good musical ear. While describing the sweetness of Pārvati's voice he records his own experience of the harsh and disagreeable sound of a discordant Veenā.[1]

2. Kālidāsa was a musician. He knew several Rāgas. In Kumārasambhava he says that Siva was awakened by the Kinnaras, who sang to him the कैशिक Rāga by means of several

1 स्वरेण तस्याममृतस्रुतेव प्रजल्पितायामभिजातवाचि ।
अप्यन्यपुष्टा प्रतिकूलशब्दा श्रोतुर्वितन्त्रीरिव ताड्यमाना ॥

—कुमार० I.45.

मूर्च्छनाs[2]. Names of three other Rāgas—भिन्नक, वलन्तिका and ककुभ occur in Vikramorvasiya IV.[3] I the Sākuntala In and V he mentions Rāga as a general term.[4]

3. Kālidāsa gives the idea of the serial stages of practising music, and of the formalities essential for a musician.

(A) He implies that a drone (= tonic) is necessary for a singer to base his song upon. The accompaniment of the flute to the song is also suggested.[5]

---

2 स व्यबुध्यत बुधस्तवोचितः शातकुम्भकमलाकरैः समम् ।
मूर्च्छनापरिगृहीतकैशिकैः किंनरैरुषसि गीतमङ्गलः ॥
—कुमार० VIII. 85.

3 पाटस्यान्ते भिन्नकः ।—विक्रमो० । IV.
एतदेव नर्तित्वा वलन्तिकयोपसृत्य जानुभ्यां स्थित्वा ।
—विक्रमो० IV.
इति ककुभेन षड्डपभङ्गाः ।—विक्रमो० IV.

4 सूत्रधारः—आर्ये, साधु गीतम् । अहो रागाबद्धचित्तवृत्तिरालिखित इव सर्वतो रङ्गः ।—शाकु० I.
सूत्रधारः—तवास्मि गीतरागेण हारिणा प्रसभं हृतः ।—शाकु० I.
राजा—अहो रागपरिवाहिणी गीतिः ।—शाकु० V.

5 यः पूरयन् कीचकरन्ध्रभागान्दरीमुखोत्थेन समीरणेन ।
उद्गास्यतामिच्छति किंनराणां तानप्रदायित्वमिवोपगन्तुम् ॥
—कुमार० I. 8.

स कीचकैर्मारुतपूर्णरन्ध्रैः कूजद्भिरापादितवंशकृत्यम् ।
शुश्राव कुञ्जेषु यशः स्वमुच्चैरुद्गीयमानं वनदेवताभिः ॥
—रघु० II. 12.

(B) In वर्णपरिचयं करोति he certainly tells us how a musician has to practise the notes, such as:—सा—रे, सासा—रेरे, सारेसा—रेगरे, सरेग,—रेगमा, सग—रेमा, सगरे—रेमाग, सरेगमा—रेगमाप.[6] etc. etc.

(C) By उपगानं—उपोहनं—कृत्वा Kālidāsa wants to show that a musician should first sing the notes of the mode (=rāga) to which the proposed song in set.[7]

(D) वस्तु गायति means that Mālavikā after singing the notes of its mode sings the piece or song "दुल्लहो...". The Vastu means what is now generally called चीज in Marathi. We find several such Prākṛta Vastus in Bharata's Nāṭyashāstra and three in Sangeeta Ratnākara. In the works of Kālidāsa there are such Prākṛta pieces ( Vastus )—one in the Mālavikāgnimitra, three in the Sākuntala and thirty-one in the Vikramorvashiya. As ancient original songs these are really most valuable with regard to music. In appendix No. 2 are given all these 35 Vastus.[8]

---

विदूषकः—भो वयस्य, संगीतशालाभ्यन्तरेऽवधानं देहि। कलविशुद्धाया गीतेः स्वरसंयोगः श्रूयते। जाने तत्रभवती हंसपादिका वर्णपरिचयं करोतीति।

—शाकु० V.

7 मालविका—( उपगानं-उपोहनं-कृत्वा...... )

—मालविका० II.

8 मालविका—(......वस्तु गायति।)

(E) Kālidāsa indicates that a musician must have a Muraja or some other kind of drum for keeping time and a stringed or wind instrument for accompaniment or drone.[9]

It will be seen from above that the present practice of our musicians to learn first the seven notes and then their several combinations in ascent and descent is reflected in Kālidāsa. Even now they sing first the notes of a mode (नोम् थोम्) and then sing the song set to that mode. They require, while singing, a तबला or पखवाज and a तंबोरा, सारंगी or flute played by their side.

## (B) INSTRUMENTAL MUSIC.

4. Kālidāsa appears to be well conversant with many drum-instruments. He gives the names of मुरज, मृदङ्ग, अङ्क्य, आलिङ्ग्य, ऊर्ध्वक, मर्दल etc. in his works; but he makes special mention of the Puskara instrument in the Mālavikāgnimitra.[10]

---

9 शब्दायन्ते मधुरमनिलैः कीचकाः पूर्यमाणाः ।
संसक्ताभिस्त्रिपुरविजयो गीयते किंनरीभिः ॥
निर्ह्रादस्ते मुरज इव चेत्कन्दरेषु ध्वनिः स्यात् ।
संगीतार्थो ननु पशुपतेस्तत्र भावी समग्रः ॥

—मेघ० I. 59.

10 ध्वनत्सु तूर्येषु सुमन्द्रमङ्क्यालिङ्ग्योर्ध्वकेष्वप्सरसो रसेन ।

—कुमार० XI. 37.

शिखरासक्तमेघानां व्यज्यन्ते यत्र वेश्मनाम् ।
अनुगर्जितसंदिग्धाः करणैर्मुरजस्वनाः ॥—कुमार० VI. 40.

5. Kālidāsa seems to have practised Tāla (keeping time· music ). He describes how Agnivarṇa, by his skilful beats the Puskara, caused the dancing girls to commit mistakes their regular gesticulations. [11]

6. Kālidāsa seems to have been a Viṇā-player. In Raghu I, while describing the position of the dead body of Indu- i taken on the lap by her husband, the Viṇā comes first ore his eyes. [12] Kālidāsa, an unrivalled master of similes, ld have certainly put another substitute there for com- ison. But the similarity of the Viṇā at once strikes him y because it was so familiar to him. It must have been

---

बलाहकाश्चाशनिशब्दमर्दलाः ।—ऋतुसंहार II. 4.
गीतानुगं वारिमृदङ्गवाद्यम् ।—रघु० XVI. 64.
( नेपथ्ये मृदङ्गध्वनिः । सर्वे कर्णं ददति । )
परिव्राजिका—हन्त प्रवृत्तं संगीतम् । तथा ह्येषा
जीमूतस्तनिताविशङ्किभिर्मयूरै-
रुद्ग्रीवैरनुरसितस्य पुष्करस्य ।
निर्ह्रादिन्युपहितमध्यमस्वरोत्था
मायूरी मदयति मार्जना मनांसि ॥ —माल० I. 21.
त्वद्गम्भीरध्वनिषु शनकैः पुष्करेष्वाहतेषु ।—मेघ० II. 6.

11 स स्वयं प्रहतपुष्करः कृती लोलमाल्यवलयो हरन्मनः ।
नर्तकीरभिनयातिलङ्घिनीः पार्श्ववर्तिषु गुरुष्वलज्जयत् ॥
—रघु० XIX. 14.

तालैः सिञ्जावलयसुभगैः कान्तया नर्तितो मे ।—मेघ० II. 19.

12 प्रतियोजयितव्यवल्लकीसमवस्थामथ सत्त्वविप्लवात् ।
स निनाय नितान्तवत्सलः परिगृह्योचितमङ्कमङ्गनाम् ॥
—रघु० VIII. 41.

his own experience of often taking it in his lap for tuning. He shows the special care taken by the Yaksa's wife and the Siddhas in wiping off the wet string of their lutes.[13] This is really a very minute yet most important point with regard to the stringed instruments. Only a practical instrumentalist or a musician is expected to show so much care of his instrument.

## (C) DANCING.

7. As Nāṭya is closely connected with music, I include it in this category in the sense of gesticulation. His knowledge of the principles of nṛtya and nāṭya none can dispute. In the Mālavikāgnimitra it is clearly seen how masterly his study of that art was. He gives us, by using many technical terms, the most graphic description of the positions of Mālavikā in the course of, and after, her dance. In Vikramorvashiya IV, he uses many technical terms relating to the Prākṛta songs, their rhythm, as also to the dancing and stage directions connected with them; e. g. प्रावेशिकी, आक्षिप्तिका, द्विपदी, जम्भलिका, खण्डधारा, चर्चरी, खण्डक, खुरक, पाट, वामक, कुटिलिका, मल्लघटी, अर्धद्विचतुरस्रक, चतुरस्रक, कुलिमा, मन्दघटी, स्थानक, गलितक, etc. Also in the Raghuvamsha, Kumārasambhava and Meghadūta he gives us very

---

13 उत्सङ्गे वा मलिनवसने सौम्य निक्षिप्य वीणाम्
मद्गोत्राङ्कं विरचितपदं गेयमुद्गातुकामा ।
तन्त्रीमार्द्रां नयनसलिलैः सारयित्वा कथंचित्
भूयोभूयः स्वयमपि कृतां मूर्च्छनां विस्मरन्ती ॥—मेघ० II. 26.
सिद्धद्वन्द्वैर्जलकणभयाद्वीणिभिर्मुक्तमार्गः ।—मेघ० I. 48.

ine descriptions of dancing [14] He makes mention of Bharat

14 (1) देवानामिदमामनन्ति मुनयः कान्तं क्रतुं चाक्षुषम् ।
रुद्रेणेदमुमाकृतव्यतिकरे स्वाङ्गे विभक्तं द्विधा ॥
त्रैगुण्योद्भवमत्र लोकचरितं नानारसं दृश्यते ।
नाट्यं भिन्नरुचेर्जनस्य बहुधाप्येकं समाराधनम् ॥

—माल० I. 4.

(2) दीर्घाक्षं शरदिन्दुकान्ति वदनं बाहू नतावंसयोः
संक्षिप्तं निबिडोन्नतस्तनमुरः पार्श्वे प्रमृष्टे इव ।
मध्यः पाणिमितोऽमितं च जघनं पादावरालाङ्गुली
छन्दो नर्तयितुर्यथैव मनसि श्लिष्टं तथास्या वपुः

—माल० II. 3.

(3) अङ्गैरन्तर्निहितवचनैः सूचितः सम्यगर्थः
पादन्यासो लयमनुगतस्तन्मयत्वं रसेषु ।
शाखायोनिर्मृदुरभिनयस्तद्विकल्पानुवृत्तौ
भावो भावं नुदति विषयाद्रागबन्धः स एव ॥

—माल० II.

(4) वामं सन्धिस्तिमितवलयं न्यस्य हस्तं नितम्बे
कृत्वा श्यामाविटपसदृशं स्रस्तमुक्तं द्वितीयं ।
पादाङ्गुष्ठालुलितकुसुमे कुट्टिमे पातिताक्षं
नृत्तादस्याः स्थितमतितरां कांतमृज्वायतार्धम् ॥

—माल० II. 6

(5) बकुला०—आज्ञप्तास्मि देव्या धारिण्या । अचिरप्रवृत्तो
छलिकं ( चलितं ) नाम नाट्यमन्तरेण कीदृशी मालविं
नाट्याचार्यमार्यगणदासं प्रष्टुम् ।—माल० I.

(6) गणदासः—इदानीमेव पञ्चाङ्गाभिनयमुपदिश्य........।

—माल० I

(7) परिव्राजिका—देव शर्मिष्ठायाः कृतिं चतुष्पदोत्थं छालिक्यं दुष्प्रयोज्यमुदाहरन्ति। —माल० I.

(8) गणदासः—देव शर्मिष्ठायाः कृतिर्लयमध्या चतुष्पदास्ति। तस्याश्चतुर्थवस्तुनः प्रयोगमेकमनाः श्रोतुमर्हति देवः।—माल० II.

(9) अभिनयान्परिचेतुमिवोद्यता
मलयमारुतकम्पितपल्लवा।
अमदयत्सहकारलता मनः
सकलिका कलिकामजितामपि॥—रघु० IX. 29.

(10) श्रुतिसुखभ्रमरस्वनगीतयः कुसुमकोमलदन्तरुचो बभुः।
उपवनान्तलताः पवनाहतैः किसलयैः सलयैरिव पाणिभिः॥

—रघु० IX. 35.

(11) अङ्गसत्ववचनाश्रयं मिथः स्त्रीषु नित्यमुपधाय दर्शयन्।
स प्रयोगनिपुणैः प्रयोक्तृभिः संजघर्ष सह मित्रसंनिधौ॥

—रघु० XIX. 36

(12) तौ सन्धिषु व्यञ्जितवृत्तिभेदं रसान्तरेषु प्रतिबद्धरागम्।
अपश्यतामप्सरसां मुहूर्तं प्रयोगमाद्यं ललिताङ्गहारम्॥

—कुमार० VII. 91.

(13) सुसंधिबन्धं ननृतुः सुवृत्तगीतानुगं भावरसानुविद्धम्।

—कुमार० XI. 36.

author of Nāṭyasāstra.[15]

8. Kālidāsa seems to have studied works on music. The cries of peacocks have been, for instance, mentioned as of the same pitch as the Saḍja, the first note of our musica scale.[16]

I have tried to explain, as far as possible, the technical terms occurring in Kālidāsa's works, in appendix No. 1.

---

(14) पादन्यासैः क्वणितरशनास्तत्र लीलावधूतैः
रत्नच्छायाखचितवलिभिश्चामरैः क्लान्तहस्ताः ।
वेश्याः ..........................॥—मेघ० I. 35.

15 देवदूतः—मुनिना भरतेन यः प्रयोगे
भवतीष्वष्टरसाश्रयो निबद्धः ।
ललिताभिनयं तमद्य भर्ता
मरुतां द्रष्टु-मनाः सलोकपालः ॥
—विक्रमोर्य० II. 17.

16 मनोभिरामाः शृण्वन्तौ रथनेमिस्वनोन्मुखैः ।
षड्जसंवादिनीः केका द्विधा भिन्नाः शिखण्डिभिः ॥
—रघु० 1.39.

# APPENDIX I.

अङ्कयः—A kind of drum.

अङ्गम्—A branch, a subdivision, an aspect, limb, body.

अङ्गहारः—Gesticulation.

अनुविद्ध—Accompanied by, full of.

अभिनयः—Gesticulation.

अर्थः—Meaning, outfit or apparatus.

आक्षिप्तिका—A particular song or air which is sung by a
approaching the stage.

आतोद्यम्—Any kind of musical instrument.

आलापः—A form of the prelude of a Rāga.

उद्गानम्:—Singing in a high pitch ( in गन्धारग्राम ).

उपगानम्—The prelude of a Rāga.

उपदेशः—Instruction.

उपवहनम्—See उपगानम् ।

उपवीणय—To play upan a Viṇā in unison with singing,
Viṇa to.

उपोहनम्—See उपगानम्.

ऊर्ध्वकः—A kind of drum.

ककुभः—Name of a Rāga, a kind of metre.

करणः—A term for various beats on a drum.

कला—Art, a measure of timing.

कलिका—The bottom of a peg of the Indian lute.

किन्नरः—Celestial bard.

कीचकः—The Bamboo tree.

कुटिलिका— } A peculiar movement or gesture.
कुलिका— }

कृतिः—Composition, action.

कैशिक—Name of a ग्रामराग.

खण्डकः—A kind of dance of air, name or a metre.

खण्डधारा— " " " "

खुरकः—A kind of dance.

गलितकः—A kind of dance or gesticulation.

चतुरस्रकः—Name of various postures in dancing.

चर्चरी-रिका—A kind of gesture of song, musical symphony. Striking the hand to beat time.

चलितम्—A song consisting of four parts and recited with certain gestures or gesticulation.

चतुष्पद्—Having four parts.

छलिक-तम्—See चलितम्.

जम्भलिका—A kind of song.

तन्त्री—Vieeṇā, a kind of guitar, string.

तानः—The drone or toinc. Accompaniment.

तालः—Rhythm, timing in music.

तेना—A meaningless combination of characters used in singing the prelude of a Rāga.

तूर्यः—See आतोद्यम् ।

दुन्दुभिः—A kind of drum.

द्विपदिका—A peculiar movement. A kind of metre.

नर्तकी—A dancing girl.

नर्तयितृ—A dancing teacher.

नाट्यम्—Gesticulation with language.

नृत्तम्—Simple dancing.

नृत्यम्—Gesticulation without language.

नेपथ्यम्—Costume of an actor, the part of a stage behind the scenes.

पटहः—A kind of drum.

परिवादिनी—A lute.

पाटः—A combination of latters in drum-beating.

पादन्यासः—Stepping in dancing.

पुष्करः—A kind of drum.

प्रयोगः—Representation.

प्रावेशिकी—Relating to the entrance on the stage.

प्राश्निकः—An umpire, an examiner.

प्रेक्षागृहम्—A theatre.

भरतः—Name of the author of Nāṭyashastra.

भावः—Emotion, condition of the mind or body.

भिन्नकः—Name of a Rāga.

भेरी—A kettle-drum.

मन्दघटी—A kind of metre.

मर्दलः—A kind of drum.

मल्लघटी—A kind of dancing or pantomimic gestute.

मायूरी—One of the special beats on the Pushkara drum.

मार्गः—Style of singing, dancing or acting.

मार्जना—A form of beating on a drum.

मुरजः—A kind of drum.

मूर्च्छना—The regular ascent and descent of the notes complete musical scale.

मृदङ्गः—A kind of drum.

मृदु—Beautiful.

रसः—Sentiment, flavour.

रागः—A musical mode.

लयः—Regulated time in music.

वंशः—The Bamboo, a flute ;—कृत्यम् Playing on the flute.

वर्णः—Elements of singing.

वलन्तिका—A peculiar Rāga.

वल्लकी—Viṇā, a lyre.

वस्तु—A composition, a piece, plot.

वितन्त्री—A lyre baving discordant strings.

वृत्तिः—Style of dramatic representation Action.

वेणुः—Flute.

शङ्खः—A conch.

शाखायः—( Gesticulation by ) poses of the hand.

षड्जसंवादिनी—Resembling the shadja, the first note of a musical scale or drone

संगीतकम्—Music, comprising dancing etc.

संगीतरचना—Preliminaries of respresentation.

संगीतशाला—Concert-hall.

सत्त्वम्—Life, purity, style; the pegs of a lyre by which its strings are strained

संधिः—Critical junctures or situations in a drama.

स्थानम्—See तानः

स्थानकः—A particular point or situation in dramatic action.

स्वरः—A tone, a note.

---

## APPENDIX II

( 1 ) दुल्लहो पिहो तस्सिं. ... ... ... मालविका II. 4.

( 2 ) ईसीसि चुम्बिआइं. ... ... ... शाकुंतले I. 1.

( 3 ) अहिणवमहुलोलुवो. ... ... ... शाकुंतले V. 1.

( 4 ) अविसअगमणम्. ... ... ... शाकुंतले VII. 1. ( Kashmir Mss. )

( 5–35 ) चर्चरी. ... ... ... ... विक्रमो. IV.

Vide pages 135–149 of this Book.

END.

---

Printed by Dinkar Sitaram Sakhalkar at the Lokasevak Press, Khatav Building, Girgaon, Bombay No. 4
Published by Keshav Appa Padhye, B. A. LL. B at New Bhatwadi, Girgaon, Bombay No. 4

## Appendix C.

It is a well-known fact to readers of Sanskrit Literature that the writings of Kalidas are embllished with Similes unparalled for their exquisite beauties and appropriateness. We propose/ to give a few selections of these.

### अभिज्ञानशाकुन्तले

गच्छति पुरः शरीरं धावति पश्चादसंस्तुतं चेतः ।
चीनांशुकमिव केतोः प्रतिवातं नीयमानस्य ॥ १—३० ॥

शमप्रधानेषु तपोधनेषु गूढं हि दाहात्मकमस्ति तेजः ।
स्पर्शानुकूला इव सूर्यकान्तास्तदन्यतेजोऽभिभवाद्वमन्ति ॥२—७॥

सुरयुवतिसंभवं किल मुनेरपत्यं तदुज्झिताधिगतम् ।
अर्कस्योपरि शिथिलं च्युतमिव नवमालिकाकुसुमम् ॥ २—८ ॥

कृत्ययोर्भिन्नदेशत्वाद्द्वैधीभवति मे मनः ।
पुरः प्रतिहतं शैले स्रोतः स्रोतोवहो यथा ॥ २—१७ ॥

स्मर एव तापहेतुर्निर्वापयिता स एव मे जातः ।
दिवस इवाभ्रश्यामस्तपात्यये जीवलोकस्य ॥ ३—१९ ॥

धूमाकुलितदृष्टेरपि यजमानस्य पावक एवाहुतिः पतिता ॥ ४ ॥

**शकुन्तला**—( पितरमाश्लिष्य । ) कथमिदानीं तातस्याङ्कात्परिभ्रष्टा मलयतरून्मूलिता चन्दनलतेव देशान्तरे जीवितं धारयिष्ये॥४॥

यूथानि संचार्य रविप्रतप्तः शीतं दिवास्थानमिव द्विपेन्द्रः॥५—५

नातिश्रमापनयनाय न च श्रमाय ।
राज्यं स्वहस्तधृतदण्डमिवातपत्रम् ॥ ५—६

तथापीदं शश्वत्परिचितविविक्तेन मनसा ।
जनाकीर्णं मन्ये हुतवहपरीतं गृहमिव ॥ ५–१०

कास्विदवगुण्ठनवती नातिपरिस्फुटशरीरलावण्या ।
मध्ये तपोधनानां किसलयमिव पाण्डुपत्राणाम् । ५–१३

तमस्तपति घर्मांशौ कथमाविर्भविष्यति । ५–१४

इदमुपनतमेवं रूपमक्लिष्टकान्ति
प्रथमपरिगृहीतं स्यान्न वेति व्यवस्यन् ।
भ्रमर इव विभाते कुन्दमन्तस्तुषारं
न च खलु परिभोक्तुं नैव शक्नोमि हातुम् ॥ ५–१९ ॥

व्यपदेशमाविलयितुं किमीहसे जनमिमं च पातयितुम् ।
कूलंकषेव सिन्धुः प्रसन्नमम्भस्तटतरुं च ॥ ५–२१ ॥

कुमुदान्येव शशाङ्कः सविता बोधयति पङ्कजान्येव ।
वशिनां हि परपरिग्रहसंश्लेषपराङ्मुखी वृत्तिः ॥ ५–२८ ॥

संस्कारोल्लिखितो महामणिरिव क्षीणोऽपि नालक्ष्यते । ६–६

साक्षात्प्रियामुपगतामपहाय पूर्वं
चित्रार्पितां पुनरिमां बहु मन्यमानः
स्रोतोवहां पथि निकामजलामतीत्य
जातः सखे प्रणयवान्मृगतृष्णिकायाम् ॥ ६–१६

संरोपितेऽप्यात्मनि धर्मपत्नी त्यक्ता मया नाम कुलप्रतिष्ठा ।
कल्पिष्यमाणा महते फलाय वसुंधरा काल इवोप्तबीजा॥६-२४

महतस्तेजसो बीजं बालोऽयं प्रतिभाति मे ।
स्फुलिङ्गावस्थया वन्हिरेधापेक्ष इव स्थितः ॥ ७–१९
अलक्ष्यपत्रान्तरमिद्धरागया नवोषसा भिन्नमिवैकपङ्कजम्।७-१६
स्मृतिभिन्नमोहतमसो दिष्ट्या प्रमुखे स्थितासि मे सुमुखि ।
उपरागान्ते शशिनः समुपगता रोहिणी योगम् ॥ ७–२२

## मेघदूते ।

रेवां द्रक्ष्यस्युपलविषमे विन्ध्यपादे विशीर्णां
भक्तिच्छेदैरिव विरचितां भूतिमङ्गे गजस्य ॥ १९ ॥
संसर्पन्त्या सपदि भवतः स्रोतसि च्छाययासौ
स्यादस्थानोपगतयमुनासङ्गमेवाभिरामा ॥ ५१ ॥
या वः काले वहति सलिलोद्गारमुच्चैर्विमाना
मुक्ताजालग्रथितमलकं कामिनीवाभ्रवृन्दम् ॥ ६२ ॥

## कुमारसम्भवे ।

पूर्वापरौ तोयनिधी वगाह्य स्थितः पृथिव्या इव मानदण्डः १–१
तया दुहित्रा सुतरां सवित्री स्फुरत्प्रभामण्डलया चकासे ।
विदूरभूमिर्नवमेघशब्दादुद्भिन्नया रत्नशलाकयेव ॥ १–२४ ॥
महीभृतः पुत्रवतोऽपि दृष्टिस्तस्मिन्नपत्ये न जगाम तृप्तिम् ।
अनन्तपुष्पस्य मधोर्हि चूते द्विरेफमाला सविशेषसङ्गा ॥१–२७॥
कुबेरस्य मनःशल्यं शंसतीव पराभवम् ।
अपविद्धगदो बाहुर्भग्नशाख इव द्रुमः ॥ २–२२ ॥

पर्याकुलात्वान्मरुतां वेगभङ्गोऽनुमीयते ।
अम्भसामोघसंरोधः प्रतीपगमनादिव ॥ २–२५ ॥
लब्धप्रतिष्ठाः प्रथमं यूयं किं बलवत्तरैः ।
अपवादैरिवोत्सर्गाः कृतव्यावृत्तयः परैः ॥ २–२७ ॥
भवल्लब्धवरोदीर्णस्तारकाख्यो महासुरः ।
उपप्लवाय लोकानां धूमकेतुरिवोत्थितः ॥ २–३२ ॥
तदिच्छान्ते विभो स्रष्टुं सेनान्यं तस्य शान्तये ॥
कर्मबन्धच्छिदं धर्मं भवस्येव मुमुक्षवः ॥ २–५१ ॥
उमारूपेण ते यूयं संयमस्तिमितं मनः ।
शंभोर्यतध्वमाक्रष्टुमयस्कान्तेन लोहवत् ॥ २–५९ ॥
तद्गच्छ सिद्ध्यै कुरु देवकार्यमर्थोऽयमर्थान्तरभाव्य एव ।
अपेक्षते प्रत्ययमुत्तमं त्वां बीजाङ्कुरः प्रागुदयादिवाम्भः ।३–१८।
आवर्जिता किंचिदिव स्तनाभ्यां वासो वसाना तरुणार्करागम्
पर्याप्तपुष्पस्तबकावनम्रा संचारिणी पल्लविनी लतेव ॥ ३–५४ ॥
क्व नु मां त्वदधीनजीवितां विनिकीर्य क्षणभिन्नसौहृदः ।
नलिनीं क्षतसेतुबन्धनो जलसंघात इवासि विद्रुतः ॥ ४–६ ॥
तमवेक्ष्य रुरोद सा भृशं स्तनसंबाधमुरो जघान च ।
स्वजनस्य हि दुखमग्रतो विवृतद्वारमिवोपजायते ॥ ४–२६ ॥
विधिना कृतमर्धवैशसं ननु मां कामवधे विमुञ्चता ।
अनपायिनि संश्रयद्रुमे गजभग्ने पतनाय वल्लरी ॥ ४–३१ ॥

इति देहविमुक्तये स्थितां रतिमाकाशभवा सरस्वती ।
शफरीं ह्रदशोषविक्लवां प्रथमा वृष्टिरिवान्वकम्पयत् ॥ ४–३९ ॥

तदिदं परिरक्ष शोभने भवितव्यप्रियसंगमं वपुः ।
रविपीतजला तपात्यये पुनरोघेन हि युज्यते नदी ॥ ४–४४

अथ मदनवधूरुपप्लवान्तं व्यसनकृशा परिपालयांबभूव ।
शशिन इव दिवातनस्य लेखा किरणपरिक्षयधूसरा प्रदोषम् ४-४६

मनीषिताः सन्ति गृहेषु देवतास्तपः क्व वत्से क्व च तावकं वपुः ।
पदं सहेत भ्रमरस्य पेलवं शिरीषपुष्पं न पुनः पतत्रिणः ॥५-४॥

किमित्यपास्याभरणानि यौवने धृतं त्वया वार्धकशोभि वल्कलम् ।
वद प्रदोषे स्फुटचन्द्रतारका विभावरी यद्यरुणाय कल्पते ५–४४

मुनिव्रतैस्त्वामतिमात्रकार्शितां दिवाकराप्लुष्टविभूषणास्पदाम् ।
शशाङ्कलेखामिव पश्यतो दिवा सचेतसः कस्य मनो न दूयते।४८।

अत आहर्तुमिच्छामि पार्वतीमात्मजन्मने ।
उत्पत्तये हविर्भोक्तुर्यजमान इवारणिम् ॥ ६–२८ ॥

सा मङ्गलस्नानविशुद्धगात्री गृहीतपत्युद्गमनीयवस्त्रा ।
निवृत्तपर्जन्यजलाभिषेका प्रफुल्लकाशा वसुधेव रेजे ॥ ७–११ ॥

मूर्ते च गङ्गायमुने तदानीं समाचरे देवमसेविषाताम् ।
समुद्रगारूपविपर्ययेऽपि सहंसपाते इव लक्ष्यमाणे ॥ ७–४२

विलोलनेत्रभ्रमरैर्गवाक्षाः सहस्रपत्राभरणा इवासन् ॥ ७–६२ ॥

गणाश्च गिर्यालयमभ्यगच्छन्प्रशस्तमारम्भमिवोत्तमार्थाः ॥ ७-७१

## रघुवंश.

मन्दः कवियशःप्रार्थी गमिष्याम्युपहास्यताम् ।
प्रांशुलभ्ये फले लोभादुद्बाहुरिव वामनः ॥ १–३ ॥
अथवा कृतवाग्द्वारे वंशेऽस्मिन्पूर्वसूरिभिः ।
मणौ वज्रसमुत्कीर्णे सूत्रस्येवास्ति मे गतिः ॥ १–४ ॥
तस्य संवृतमन्त्रस्य गूढाकारेङ्गितस्य च ।
फलानुमेयाः प्रारम्भाः संस्काराः प्राक्तना इव ॥ १–२० ॥
गुणा गुणानुबन्धित्वात्तस्य सप्रसवा इव ॥ १–२२ ॥
काप्यभिख्या तयोरासीद्व्रजतोः शुद्धवेषयोः ।
हिमनिर्मुक्तयोर्योगे चित्राचन्द्रमसोरिव ॥ १–४६ ॥
विधेः सायंतनस्यान्ते स ददर्श तपोनिधिम् ।
अन्वासितमरुन्धत्या स्वाहयेव हविर्भुजम् ॥ १–५६ ॥
असह्यपीडं भगवन्नृणमन्त्यमवेहि मे ।
अरुंतुदमिवालानमनिर्वाणस्य दन्तिनः ॥ १–७१ ॥
मार्गं मनुष्येश्वरधर्मपत्नी श्रुतेरिवार्थं स्मृतिरन्वगच्छत् ॥ २–२ ॥
पयोधरीभूतचतुःसमुद्रां जुगोप गोरूपधरामिवोर्वीम् ॥ २–३ ॥
आसीदनाविष्कृतदानराजिरन्तर्मदावस्थ इव द्विपेन्द्रः ॥ २–७ ॥
अवाकिरन्बाललताः प्रसूनैराचारलाजैरिव पौरकन्याः ॥२–१०॥
स पाटलायां गवि तस्थिवांसं धनुर्धरः केसरिणं ददर्श ।
अधित्यकायामिव धातुमय्यां लोध्रद्रुमं सानुमतः प्रफुल्लम् २–२९

राजा स्वतेजोभिरदह्यतान्तर्भोगीव मन्त्रौषधिरुद्धवीर्यः ॥२–३२॥
उपस्थिता शोणितपारणा मे सुरद्विषश्चान्द्रमसी सुधेव ॥२–३९॥
तमाहितौत्सुक्यमदर्शनेन प्रजाः प्रजार्थव्रतकर्शिताङ्गम् ।
नेत्रैः पपुस्तृप्तिमनाप्नुवद्भिर्नवोदयं नाथमिवौषधीनाम् ॥२–७३॥
शरीरसादादसमग्रभूषणा मुखेन सालक्ष्यत लोध्रपाण्डुना ।
तनुप्रकाशेन विचेयतारका प्रभातकल्पा शशिनेव शर्वरी ॥३–२॥
पुपोष वृद्धिं हरिदश्वदीधितेरनुप्रवेशादिव बालचन्द्रमाः॥३–२२॥
स वृत्तचूलश्चलकाकपक्षकैरमात्यपुत्रैः सवयोभिरन्वितः ।
लिपेर्यथावद्ग्रहणेन वाङ्मयं नदीमुखेनेव समुद्रमाविशत् ॥३–२८॥
ततार विद्याः पवनातिपातिभिर्दिशो हरिद्भिर्हरितामिवेश्वरः ३–३०
विभावसुः सारथिनेव वायुना घनव्यपायेन गभस्तिमानिव ।
बभूव तेनातितरां सुदुःसहः कटप्रभेदेन करीव पार्थिवः ॥३–३७॥
शशाक निर्वापयितुं न वासवः स्वतश्च्युतं वह्निमिवाद्भिरम्बुदः ३-५८
मन्दोत्कण्ठाः कृतास्तेन गुणाधिकतया गुरौ ।
फलेन सहकारस्य पुष्पोद्गम इव प्रजाः ॥ ४–९ ॥
रामास्त्रोत्सारितोऽप्यासीत्सह्यलग्न इवार्णवः ॥ ४–५३ ॥
यवनीमुखपद्मानां सेहे मधुमदं न सः ।
बालातपमिवाब्जानामकालजलदोदयः ॥ ४–६१ ॥
यतस्त्वया ज्ञानमशेषमाप्तं लोकेन चैतन्यमिवोष्णरश्मेः ॥५–४॥
आरण्यकोपात्तफलप्रसूतिः स्तम्बेन नीवार इवावशिष्टः ॥५–१५॥
न कारणात्स्वाद्बिभिदे कुमारः प्रवर्तितो दीप इव प्रदीपात् ५-३७
शिलाविभङ्गैर्मृगराजशावस्तुङ्गं नगोत्सङ्गमिवारुरोह । ६—३

सहस्रधात्माव्यरुचाद्विभक्तः पयोमुचां पङ्क्तिषु विद्युतेव । ६–५
रराज धाम्ना रघुसूनुरेव कल्पद्रुमाणामिव पारिजातः ६–६
मदोत्कटे रेचितपुष्पवृक्षा गन्धद्विपे वन्य इव द्विरेफाः ६–७
कामं नृपाः सन्तु सहस्रशोऽन्येराजन्वतीमाहुरनेन भूमिम् ।
नक्षत्रताराग्रहसंकुलापि ज्योतिष्मती चन्द्रमसैव रात्रिः ॥ ६–२२
तस्याः प्रकामं प्रियदर्शनोऽपि न स क्षितीशो रुचये बभूव ।
शरत्प्रमृष्टाम्बुधरोपरोधः शशीव पर्याप्तकलो नलिन्याः ॥ ६–४४
नृपं तमावर्तमनोज्ञनाभिः सा व्यत्यगादन्यवधूर्भवित्री ।
महीधरं मार्गवशादुपेतं स्रोतोवहा सागरगामिनीव ॥ ६–५२
आभाति बालातपरक्तसानुः सनिर्झरोद्गार इवाद्रिराजः ॥६–६०
अन्योन्यशोभापरिवृद्धये वां योगस्तडित्तोयदयोरिवास्तु ॥६–६५
दुकूलवासाः स वधूसमीपं निन्ये विनीतैरवरोधरक्षैः ।
वेलासकाशं स्फुटफेनराजिर्नवैरुदन्वानिव चन्द्रपादैः ७–१९
हस्तेन हस्तं परिगृह्य वध्वाः स राजसूनुः सुतरां चकासे ।
अनन्तराशोकलताप्रवालं प्राप्येव चूतः प्रतिपल्लवेन । ७–२१
मत्स्यध्वजा वायुवशाद्विदीर्णैर्मुखैः प्रवृद्धध्वजिनीरजांसि ।
बभुः पिबन्तः परमार्थमत्स्याः पर्याविलानीव नवोदकानि । ७-४०
आवृण्वतो लोचनमार्गमाजौ रजोऽन्धकारस्य विजृम्भितस्य ।
शस्त्रक्षताश्वद्विपवीरजन्मा बालारुणोऽभूद्रुधिरप्रवाहः ॥ ७–४२
शिलीमुखोत्कृत्तशिरः फलाढ्या च्युतैःशिरस्त्रैश्चषकोत्तरेव ।
रणक्षितिः शोणितमद्यकुल्या रराज मृत्योरिव पानभूमिः॥७–४९

व्यूहावुभौ तावितरेतरस्माद्भङ्गं जयं चापतुरव्यवस्थम् ।
पश्चात्पुरोमारुतयोः प्रवृद्धौ पर्यायवृत्त्येव महार्णवोर्मी ॥ ७–५४

निवारयामास महावराहः कल्पक्षयोद्वृत्तमिवार्णवाम्भः ॥ ७-५६

ह्रष्टापि सा ह्रीविजिता न साक्षाद्वाग्भिः सखीनां प्रियमभ्यनन्दत् ।
स्थलीनवाम्भःपृषताभिवृष्टा मयूरकेकाभिरिवाभ्रवृन्दम् ॥ ७–६९

सदयं बुभुजे महाभुजः सहसोद्वेगमियं व्रजेदिति ।
अचिरोपनतां स मेदिनीं नवपाणिग्रहणां वधूमिव ॥ ८–७

अहमेव मतो महीपतेरिति सर्वः प्रकृतिष्वचिन्तयत् ।
उदधेरिव निम्नगाशतेष्वभवन्नास्य विमानना क्वचित् ॥ ८–८

न तु सर्प इव त्वचं पुनः प्रतिपेदे व्यपवर्जितां श्रियम् । ८–१३॥

यतिपार्थिवलिङ्गधारिणौ ददृशाते रघुराघवौ जनैः ।
अपवर्गमहोदयार्थयोर्भुवमंशाविव धर्मयोर्गतौ ॥ ८–१६

अनृणत्वमुपेयिवान्बभौ परिधेर्मुक्त इवोष्णदीधितिः । ८–३०

क्षणमात्रसखीं सुजातयोः स्तनयोस्तामवलोक्य विह्वला ।
निमिमील नरोत्तमप्रिया हृतचन्द्रा तमसेव कौमुदी ॥ ८–३७ ॥

पतिरङ्कनिषण्णया तया करणापायविभिन्नवर्णया ।
समलक्ष्यत बिभ्रदाविलां मृगलेखामुषसीव चन्द्रमाः ॥ ८–४२ ॥

प्रबुद्धपुण्डरीकाक्षं बालातपनिभांशुकम् ।
दिवसं शारदमिव प्रारम्भसुखदर्शनम् ॥ १०–९ ॥

आविर्भूतमपां मध्ये पारिजातमिवापरम् ॥ १०–११ ॥

बभौ सदशनज्यौत्स्ना सा विभोर्वदनोद्गता ।
निर्यातशेषा चरणाद्गङ्गेवोर्ध्वप्रवर्तिनी ॥ १०–३७ ॥

स्रष्टुर्वरातिसर्गात्तु मया तस्य दुरात्मनः ।
अत्यारूढं रिपोः सोढं चन्दनेनेव भोगिनः ॥ १०–४२ ॥

सैकताम्भोजबलिना जाह्नवीव शरत्कृशा ॥ १०–६९ ॥

ज्योतिरिन्धननिपाति भास्करात्सूर्यकान्त इव ताडकान्तकः ११-२३
तेन शैलगुरुमप्यपातयत्पाण्डुपत्रमिव ताडकासुतम् ॥११–२८॥

सा किलाश्वासिता चण्डी भर्त्रा तत्संश्रुतौ वरौ ।
उद्ववामेन्द्रसिक्ता भूर्बिलमग्नाविवोरगौ ॥ १२–५ ॥

स जहार तयोर्मध्ये मैथिलीं लोकशोषणः ।
नभोनभस्ययोर्वृष्टिमवग्रह इवान्तरे ॥ १२–२९ ॥

तस्यापतन्मूर्ध्नि जलानि जिष्णोर्विन्ध्यस्य मेघप्रभवा इवापः १४–८
मत्तः सदाचारशुचेः कलङ्कः पयोदवातादिव दर्पणस्य ।१४–३७।
पौरेषु सोऽहं बहुलीभवन्तमपां तरङ्गेष्विव तैलबिन्दुम् ।
सोढुं न तत्पूर्वमवर्णमीशे आलानिकं स्थाणुमिव द्विपेन्द्रः।१४-३८।
गङ्गा निषादाहृतनौविशेषस्ततार संधामिव सत्यसंधः ॥१४–५२॥

जनास्तदालोकमथात्प्रतिसंहृतचक्षुषः ।
तस्थुस्तेऽवाङ्मुखाः सर्वे फलिता इव शालयः ॥ १५–७८ ॥

अगस्त्यचिह्नादयनात्समीपं दिगुत्तरा भास्वति संनिवृत्ते ।
आनन्दशीतामिव बाष्पवृष्टिं हिमस्रुतिं हैमवतीं ससर्ज ॥१६-४४॥

वनेषु सायंतनमल्लिकानां विजृम्भणोद्गन्धिषु कुड्मलेषु ।
प्रत्येकनिक्षिप्तपदः सशब्दं संख्यामिवैषां भ्रमरश्चकार ॥ १६-४७ ॥
पश्यावरोधैः शतशो मदीयैर्विगाह्यमानो गलिताङ्गरागैः ।
संध्योदयः साभ्र इवैष वर्णं पुष्यत्यनेकं सरयूप्रवाहः ॥ १६–५८ ॥
तेनावरोधप्रमदासखेन विगाहमानेन सरिद्वरां ताम् ।
आकाशगङ्गारतिरप्सरोभिर्वृतो मरुत्वाननुयातलीलः ॥ १६–७१ ॥
तस्य सन्मन्त्रपूताभिः स्नानमद्भिः प्रतीच्छतः ।
ववृधे वैद्युतस्याग्नेर्वृष्टिसेकादिव द्युतिः ॥ १७–१६ ॥
बभौ भूयः कुमारत्वादाधिराज्यमवाप्य सः ।
रेखाभावादुपारूढः सामग्र्यामिव चन्द्रमाः ॥ १७–३० ॥
सर्पस्येव शिरोरत्नं नास्य शक्तित्रयं परः ।
स चकर्ष परस्मात्तदयस्कान्त इवायसम् ॥ १७–६३ ॥



K. A. Padhye B. A. LL. B. has really obliged the lovers
krit Literature and particularly those of Kalidasa's books by
out this small book. The arrangement followed in this
particularly happy. It affords great facility to the study of
ks of Kalidas in their different aspects, thus to the study of
t's mind and art. It would have much added to the utility
ook, if Mr. Padhye had given his own appreciation of the
g passages at the beginning of each chapter. As it is, how-
e book is very useful and will surely help to promote the
study of Kalidas and his works.

**H. D. VELANKAR**, M. A.,
Professor of Sanskrit, Wilson College.

---

r Mr. Padhye,

overs of Sanskrit Literature and particularly of Kalidasa will
nkful to you for bringing together in a handy form selec-
om the works of Kalidasa and some of his *bon mots*.

selection has been made with care and judiciousness. The
features of the muse of Kalidasa are well brought out in
ume. His unrivalled command over Sanskrit, the ease
ce of his style, his lofty conception of the Supreme Being,
er of compressing suggestive thoughts in a few well chosen
his apt similes, his spirited dialogues-these and several
xcellences are well illustrated in these selections. I hope
s disinterested effort of yours will increase the circle of the
rs and students of the prince of Sanskrit poets.

Yours Sincerely,

**P. V. KANE**, M. A. LL. M,
Vakil, High Court.